महाकविराजशेखर-विरचितः

# काव्यमीमांसा

[ 'शिखा' संस्कृत, हिन्दी व्याख्या सहित ]

सम्पादक

डॉ० चन्द्रमौली द्विवेदी

प्रकाशक

भारतीय विद्या संस्थान

जगतगंज–वाराणसी

संस्करण–द्वितीय ]

[ मूल्य–२०-००

श्रीमद्राजशेखरविरचिता

# काव्यमीमांसा

( १-५ अध्यायः )

शिखाभिध संस्कृत-हिन्दीव्याख्योपेता


व्याख्याकारः

डॉ० चन्द्रमौलि द्विवेदी

प्रवक्ता, काशीहिन्दूविश्वविद्यालय

वाराणसी



भारतीय विद्या संस्थान

प्रकाशक एवं पुस्तक विक्रेता

सी० २७/५९, जगतगंज, वाराणसी

# भूमिका

## ग्रन्थकर्तुः श्रीमद्राजशेखरस्य परिचयः

महाराष्ट्रदेशवासी श्रीमद्राजशेखरो यायावरवंशीय इति प्रसिद्धम् ।
यायावरवंशः,

पुष्पिण्यौ चरतो जङ्घे भूष्णुरात्माफलेग्रहिः ।
शेरेऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हताः ॥

इति वचनमनुसृत्य प्रवर्तमानो वानप्रस्थीयमहर्षिणीसम्बन्धी प्रतीयते । स्वयमेव राजशेखरो बालरामायणे महाराष्ट्रचूडामणेरकालजलदस्य प्रपौत्रं दुर्दुकेः शीलवत्यां चोत्पन्नमात्मानं दर्शितवान् । तत्रोक्तवांश्च तदामुष्यायणमहाराष्ट्रचूडामणेरकालजलदस्य चतुर्थो दौर्दुकिः शीलवतीसूनुरुपाध्यायश्रीराजशेखर इत्यपर्याप्तं बहुमानेन ।[1] तथा च

"तदकालजलदप्रणप्तुस्तस्य गुणगणः कथं न वर्ण्यते ।[2] इति

क्षत्रवंशोद्भवा अवन्तिसुन्दरी श्रीराजशेखरस्य भार्या । विदुषीयमिति यत्रतत्र अस्या मतस्योल्लेखेन स्पष्टीभवति । यथा अत्रैव काव्यमीमांसायां पा..निरूपणप्रस्तावे "इयमशक्तिरिति अवन्तिसुन्दरी" इत्युल्लिखितवान् ।

समयः—श्रीराजशेखरस्य समयनिर्णयेऽन्यसंस्कृतकविविदुषामिवोहसंशीतिर्न भवति । अयं चतुर्णामपि दृश्यकाव्यानां प्रस्तावनायामात्मानं महेन्द्रपालगुर्जरप्रतिहारवंशस्य राज्ञो महेन्द्रपालस्योपाध्यायं लिखितवान् । महीपतेर्महेन्द्रपालस्य सुतस्य महीपालस्यापि स्वसंरक्षकत्वेन निर्देशमकरोत् । यथोक्तवान्

"रघुकुलतिलको महेन्द्रपालः सकलकलानिलयः स यस्य शिष्यः"[3] इति

९७४ विक्रमाब्द उट्टङ्कितेषु शिलालेखेषु महेन्द्रपालस्य राज्ञो नामादिरुल्लिखितः । अनेन महेन्द्रपालस्य समयः ९६५ विक्रमाब्दतः पूर्वं महीपालस्य

---

१—बालरामायण प्रस्तावना–१

२—विद्धशालभञ्जिका–१

३— ,, ,, अङ्क–१

चातः परं, स्पष्टीभवति। तदनु ९४७ विक्रमाब्दतः ९६५ विक्रमाब्दं यावन्महेन्द्र-पालस्य ९६७–९९७ विक्रमाब्दं यावन्महीपालस्य समयो निर्विवादं निश्चीयते। एवञ्च राजशेखरस्य समयः ९३७ विक्रमाब्दतः ९७७ विक्रमाब्दं तदनु ८८० ख्रिष्टाब्दतः ९२० ख्रिष्टाब्दं यावन्निश्चितो भवति।

श्रीराजशेखरेण कश्मीरवासिनामुद्भट-वामन-आनन्दवर्धनानां, तथा कन्नौज-वासिनः श्रीवाक्पतिराजस्य नामान्युल्लिखितानि। उद्भटो जयापीडस्य नृपतेः सभापतिरासीत्। यथोक्तम्—

विद्वान् दीनारलक्षेण प्रत्यहं कृतवेतनः।
भट्टोऽभूदुद्भटस्तस्य भूमिभर्तुः सभापतिः॥[1]

जयापीडस्य समयः ८३६ विक्रमाब्दतः ८७० विक्रमाब्दं यावन्निश्चितोऽस्ति। वामनस्यापि एष एव समयः। ९१४ विक्रमाब्दतः ९४१ विक्रमाब्दं यावच्छासनं कुर्वतो राज्ञोऽवन्तिवर्मणः सभापतिः श्रीमदानन्दवर्धन आसीत्। क्षेमेन्द्र-सोमदेव-सोड्ढलप्रभृतयः श्रीराजशेखरमुद्धृतवन्तः। इत्थं क्षेमेन्द्रप्रभृतिभ्यः पूर्वम्, उद्भट-प्रभृतिभ्यः परं श्रीराजशेखरः क्षितौ व्यराजत इति ९३७ विक्रमाब्दतः ९७७ विक्रमाब्दं यावदस्य समयो निश्चप्रचः।

रचना—श्रीराजशेखरस्य पञ्चकृतयः समुपलभ्यन्ते द्वे चानुपलब्धे श्रूयेते। उपलब्धकृतयस्तु—१–कर्पूरमञ्जरी, २–विद्धशालभञ्जिका, ३–बालरामायणम्, ४–बालभारतम्, ५–काव्यमीमांसा। इति।

अनुपलब्धकृती तु १–हरविलासमहाकाव्यम् २–भुवनकोषश्चेति स्तः।

बालरामायणे षण्णां प्रबन्धानां स्वस्मिन् कर्तृत्वं राजशेखरेण निर्दिष्टम्। उक्तञ्च—

"यद्यस्ति स्वस्ति तुभ्यं भव पठनरुचिर्विद्धि न षट् प्रबन्धान्।
नैवं चेद्दीर्घमास्तां नटवटुवदने जर्जरा काव्यकन्था॥"[2] इति।

स्वयमेव काव्यमीमांसायां भुवनकोषस्योल्लेखं स्वस्यकृतित्वेन कृतवान्। यथा—"यस्तु जिगीषत्यधिकं पश्यतु मद्भुवनकोषमसौ" इति। भुवनकोषेण सह

१—[illegible]तरङ्गिणी–४–४९५
२—बालरामायण–१/११

राजशेखरस्य षट् प्रबन्धाः स्पष्टीभवन्ति । कांतपर्यैरुदाहरणैर्हरविलासस्याप्यनुमानं क्रियते ।

एवञ्च आद्यायाः कृतेः कर्पूरमञ्जर्याः, अन्तिमां कृतिं काव्यमीमांसां यावद् एते प्रबन्धाः श्रीमद्राजशेखरकर्तृत्वमावहन्ति इति निश्चितम् ।

प्रशस्ति।—श्रीराजशेखरस्य प्रशस्तीः परवर्तिनः कवयः मुक्तस्वरेण प्रास्तुवन् तत्समयवर्तिनौ, कविगोष्ठीमित्रे, मृगांककथारचयिता अपराजितः, गोष्ठीसदस्यः श्रीकृष्णशर्मा च ये प्रशस्ती कृतवन्तौ ते कर्पूरमञ्जर्यां विद्धशालभञ्जिकायां च स्वयं श्रीराजशेखरो निबद्धवान् । एका प्रशस्तिः प्राकृतभाषायां कर्पूमञ्जर्याम्—तस्या अर्थस्तु—राजशेखरः, प्रथमं बालकविः तदनन्तरं कविराजः, पश्चात् निर्भयराजस्योपाध्यायः, इति संज्ञित उत्तरोत्तरं महत्तामारूढवान् इति । द्वितीया तु—

पातुं श्रोत्ररसायनं रचयितुं वाचः सतां सम्मताः,
व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः ।
भोक्तुं स्वादुफलं च जीविततरोर्यद्यस्ति ते कौतुकं,
तद् भ्रातः! शृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥ इति

तिलकमञ्जरीति गद्यकाव्यस्यकर्ता जैनकविर् धनपालो राजशेखरस्य प्रशस्तिमेवं निबद्धवान् ।

समाधिगुणशालिन्यः, प्रसन्नपरिपक्त्रिमाः ।
यायावरकवेर्वाचो मुनीनामिव वृत्तयः[1] ॥

सोड्ढवल उदयसुन्दरीकथानामकचम्पूकाव्यस्य प्रारम्भे राजशेखरमधिकृत्यैवमुल्लिखितवान्—

यायावरः प्राज्ञवरो गुणज्ञैराशंसितः सूरिसमाजवर्यैः ।
नृत्यत्युदारं भणिते रसस्था नटीव यस्योढरसा पदश्रीः ॥

स्वयमेव चोदाजहार—

बभूव वल्मीकभवः कविः पुरा ततः प्रपेदे भुवि भर्तृमेण्ठताम् ।
स्थितः पुनर्यो भवभूतिरेखया स वर्त्तते सम्प्रति राजशेखरः ॥ इति ।

---

१—तिलकमञ्जरी–३३

इत्थमत्यन्तप्रशस्तः श्रीमद्राजशेखरः कविर् विलक्षणप्रतिभो महद्दयशो लब्धवानिति निर्विचिकित्सम् ।

●

## प्रथमोऽध्यायः

### काव्यस्य सम्प्रदायाविच्छेदः

काव्यस्य सम्प्रदायोऽनादिकालात् प्रवाहितोऽस्तीति राजशेखरः श्रीकण्ठात् प्रभृति सारस्वतेयस्य स्नातकान् यावत् नाम्ना निर्दिष्टवान् । तत्र प्रथमं भगवान् श्रीकण्ठः परमेष्ठिवैकुण्ठादिभ्यः शिष्येभ्यः, परमेष्ठी भगवान् स्वयम्भूश्चेच्छा जन्मभ्यः स्वान्तेवासिभ्यः, काव्यमुपदिदेश। तेषु स्वान्तेवासिषु सारस्वतेयः देवानामपि वन्द्य आसीत् यं काव्यविद्या प्रवर्तनार्थं परमेष्ठी प्रायुङ्क्त । स काव्यविद्यास्नातकेभ्योऽष्टादशभ्योऽष्टादशाधिकरणीं सप्रपञ्चमुपदिदेश ।

### अष्टादशाधिकरणीसमुद्देशः

सारस्वतेयो यामष्टाधिकरणीं स्वशिष्येभ्यः समुपदिदेश, तस्या अयं प्रकरणाधिकरणसमुद्देशः । १– कविरहस्यम् २– औक्तिकम्. ३– रीतिनिर्णयम्. ४– आनुप्रासिकं. ५– यमकानि. ६– चित्रं ७– शब्दश्लेषम् ८– वास्तवम् ९– औपम्यम्. १०– अतिशयम्. ११– अर्थश्लेषम् १२– उभयालङ्कारिकम्. १३– वैनोदिकम्. १४– रूपकनिरूपणीयम्. १५–रसाधिकारिकम्. १६–दोषाधिकरणम् १७–गुणोपदानिकम्. १८–औपनिषदिकमिति ।

इमान्यष्टादश प्रकरणाधिकरणानि क्रमशः सहस्राक्ष उक्तिगर्भः - सुवर्णनाभः - प्रचेताः यमः चित्राङ्गः शेषः - पुलस्त्यः - औपकायनः - पाराशरः - उतथ्यः कुबेरः कामदेवः भरतः नन्दिकेश्वरः धिषणः उपमन्युः - कुचमारश्च - सारस्वतेयस्य - काव्यस्नातका विरचयाञ्चक्रुः ।

पृथक्-पृथक् विरचितत्वात् प्रकीर्णत्वेन किञ्चिदुच्छिन्नत्वाद् अस्या अष्टादशाधिकरण्याः सर्वमर्थं संक्षिप्याष्टादशाधिकरणं राजशेखरः प्रणीतवान् । तेषु सप्त-

दशाधिकरणान्यनुपलब्धानि। एकमेवाधिकरणं कविरहस्यम् अत्रोपनिबद्धम्। यस्याष्टादश अध्यायाः।

**कविरहस्याख्यस्य प्रथमाधिकरणस्य अध्यायनिर्देशः**

राजशेखरस्याष्टादशाधिकरणेषु प्रथममधिकरणं कविरहस्यं यदुपनिबद्धं काव्यमीमांसायां तस्य पञ्चदश समुद्देशा अष्टादशसु अध्यायेषु विभक्ताः। ते च समुद्देशाः—१–शास्त्रसंग्रहः २–शास्त्रनिर्देशः ३–काव्यपुरुषोत्पत्तिः ४–पदवाक्यविवेकः ५–पाठप्रतिष्ठा, ६–अर्थानुशासनम्, ७–वाक्यविधयः, ८–कविविशेषः ९–कविचर्या, १०–राजचर्या, ११–काकुप्रकाराः, १२–शब्दार्थहरणोपायाः, १३–कविसमयः, १४–देशकालविभागः, १५–भुवनकोश इति सन्ति। एतेषु कस्यचित् समुद्देशस्य विवेचनं द्वाभ्यामध्यायाभ्यां विहितमिति।

●

## द्वितीयोऽध्यायः

### विद्यास्थानम्

लोके शास्त्रकाव्यभेदाभ्यां वाङ्मयं द्विधा भवति। तत्र शास्त्रं काव्यस्य योनिः। शास्त्रमपि द्विविधं–अपौरुषेयं पौरुषेयञ्च। अपौरुषेयं श्रुतिः, मन्त्रब्राह्मणाभ्यां लब्धवपुः। इयम् ऋग्यजुःसामाथर्वणैश्चतुर्धा भवति। अस्याः शिक्षा, कल्पः, व्याकरणम्, निरुक्तं, छन्दोविचितिः, ज्योतिषमिति षडङ्गानि।

पौरुषेयाणि तु शास्त्राणि पुराणाम् आन्वीक्षिकी,-मीमांसा,-स्मृतितन्त्रमिति चत्वारि। इत्थं चतुर्दश विद्यास्थानानि कैश्चित् स्वीक्रियन्तेस्म कैश्चित्तु वार्ता, कामसूत्रं, शिल्पशास्त्रं, दण्डनीतिरिति चत्वारि अतिरिक्तान्यपि स्वीकृत्याष्टादश विद्यास्थानानि स्वीकृतानि।

यायावरस्तु अङ्गेष्वेकमतिरिक्तमङ्गमलङ्कारम्, एकमतिरिक्तञ्च विद्यास्थानं काव्यं स्वीकरोति। उक्तवान् च—"उपकारकत्वादलङ्कारः सप्तममङ्गम् इति" सकलविद्यास्थानैकायतनं पञ्चदशं काव्यं विद्यास्थानमिति यायावरीयः।

एवं प्रकृतग्रन्थमनुसृत्य, पञ्चदश, एकोनविंशतिर्वा विद्यास्थानानि मन्तुं शक्यन्ते ।

### विद्या

अष्टादश विद्यास्थानानि निरूप्य चतस्रः विद्या अपि काव्यमीमांसायां निर्दिष्टाः । ताश्च आन्विक्षिकी त्रयी वार्ता दण्डनीतिश्चेति । विद्यानां विद्यात्वं तु धर्मार्थयोः साधकत्वेन सिद्धम् । विद्यानामाश्रयः विद्यास्थानम् । शास्त्रं विद्या-स्थानञ्चानर्थान्तरम् । आन्वीक्षिक्या वेदानां च विद्यास्थानत्वं विद्यात्वञ्चोभय-मेव । पञ्चमीसाहित्यविद्या इति यायावरीयः ।

### विद्या-विद्यास्थानानाञ्च लक्षणम्

श्रुतिः = अपौरुषेयं, मन्त्रब्राह्मणे च ।

मन्त्रः = विवृतक्रियातन्त्रा मन्त्राः । कर्मकाण्डकलापस्य सम्यङ्निरूपको मन्त्र इत्यर्थः ।

ब्राह्मणम् = मन्त्राणाम् स्तुतिनिन्दाव्याख्यानविनियोगग्रन्थो ब्राह्मणम् । मन्त्रभागस्य भाष्यात्मकोऽयं ग्रन्थः ।

ऋग् = अर्थव्यवस्थितपादा ऋचः ।

साम = ऋच एव संगीतयः सामानि ।

यजुः = अच्छन्दांसि अगीतानि च यजूंषि ।

शिक्षा = वर्णानां स्थानकरणप्रयत्नादिभिर्निष्पत्तिनिर्णयिनी शिक्षा । यथा—आपिशलीयादिका ।

कल्पः = नानाशाखाधीतानां मन्त्राणां विनियोजकं, सूत्रं कल्पः । स च यजुर्विद्या ।

व्याकरणम्—शब्दानामन्वाख्यानं व्याकरणम् ।

निरुक्तम्—शब्दानां वर्णागमादिभिरर्थनिर्वचनं निरुक्तम् ।

छन्दोविचितिः—छन्दसां प्रतिपादयित्री छन्दोविचितिः ।

ज्योतिषम्—ग्रहगणितं ज्योतिषम् ।

पुराणम्—वेदाख्यानोपनिबन्धनप्रायं पुराणम् ।

सर्गः प्रतिसंहारः, कल्पो मन्वन्तराणि वंशविधिः ।
जगतो यत्र निबद्धम् तद्विज्ञेयम् पुराणमिति ॥

**इतिहासः**—पुराणप्रविभेद एव इतिहासः। इतिहासो द्विधा—१–परक्रिया २–पुराकल्पश्च, उक्तञ्च—

परक्रिया पुराकल्प इतिहासगतिर्द्विधा ।
स्यादेकनायका पूर्वा द्वितीया बहुनायका ॥

रामायणम् परक्रिया । भारतं पुराकल्प इति मन्तव्यम् ।

**आन्वीक्षिकी**—प्रत्याक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा, तद्व्युत्पादिका विद्या आन्वीक्षिकी । आन्वीक्षिकी द्विधा १–पूर्वान्वीक्षिकी २–उत्तरान्वीक्षिकी इति । पूर्वान्वीक्षिकी-अर्हद्भदन्तदर्शने, लोकायतं चार्वाकं, जैनबौद्धदर्शने चेत्यर्थः । उत्तरान्वीक्षिकी तु सांख्यं न्यायवैशेषिकौ च, इति षट् तर्का आन्वीक्षिकी ।

**मीमांसा**—निगमवाक्यानां न्यायैः सहस्रेण विवेक्त्री मीमांसा । सा द्विधा—पूर्वमीमांसा, उत्तरमीमांसेति । तत्र विधिविवेचनी पूर्वमीमांसा, ब्रह्मनिदर्शनी उत्तरमीमांसोच्यते ।

**स्मृतिः**—श्रुत्यर्थस्मारिका स्मृतिः । ताश्च अष्टादश एव । अनधिका न्यूनेति एवार्थः । यथोक्तम्—"अष्टादशैव श्रुत्यर्थस्मरणात् स्मृतय" इति ।

एतानि चतुर्दशविद्यास्थानानि । यदुत वेदाश्चत्वारः षडङ्गानि, चत्वारि शास्त्राणि । यायावरीयेण पञ्चदशं विद्यास्थानं काव्यं मन्यते ।

**काव्यम्**—तत्र गद्यपद्यमयत्वात् कविधर्मत्वात् हितोपदेशकृत्वाच्च सकलविद्यास्थानैकायतनं पञ्चदशं विद्यास्थानम् काव्यमिति यायावरीयमतम् ।

विद्यास्थानानि निरूपितानि-चतसृषु विद्यासु त्रयी आन्वीक्षिकी चेति द्वेविद्येऽपि-निरुपिते तयोर्विद्यास्थानत्वाद् अपि ।

**वार्ता**—वृत्तिविनयग्रहणं सा च स्थितिहेतुर्लोकयात्रायास् तन्निरूपिका विद्या वार्ता ।

**दण्डनीतिः**—यद्भयात् कृत्स्नो लोकः स्वेषु स्वेषु कर्मस्ववतिष्ठते स दण्डः, तस्य नीतिः निरूपणं वा यस्यां सा दण्डनीतिः ।

**साहित्यविद्या**—शब्दार्थयोर्यथावत्सहभावेन विद्या साहित्यविद्या । सा हि चतसृणां विद्यानां निष्यन्दः ।

शास्त्राणि यैः प्रणीयन्ते ते सूत्र-वृत्ति-पद्धति-भाष्य-समीक्षा—टीका—पंज्जिका-कारिका-वार्तिक-प्रकरण-अध्यायाः- भवन्ति । तेषु ।

सूत्रम्—सूत्र लक्षणन्तु-

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यञ्च सूत्रं सूत्रकृतो विदुः ।। इत्युक्तम्

व्याख्या तु टीकायां द्रष्टव्यम् ।

वृत्तिः—सूत्राणां सकलसारविबरणं वृत्तिः ।

पद्धतिः—सूत्रवृत्तिविवेचनं पद्धतिः ।

भाष्यम्—सूत्रार्थं पूर्वपक्षत्वेन सन्दूष्योत्तरपक्षत्वेन सिद्धान्तभाषणं भाष्यम् ।

समीक्षा— भाष्यमवलम्ब्य क्रियमाणोऽन्तर्भाष्यविचारः समीक्षा । अनया अवान्तरार्थो विच्छिद्यते ।

टीका—यथासम्भवं वाङ्मयस्यार्थस्य टीकनं टीका ।

पञ्जिका—दुरूहपदानामर्थप्रकाशनेन पृथग्दर्शिका पञ्जिका-यथोक्तम्-विषमपदभञ्जिका पञ्जिका ।

कारिका—सूत्रगतार्थप्रदर्शनाय छन्दोबद्धा वाक् कारिका । उक्तञ्च-अर्थप्रदर्शनकारिका कारिका ।

वार्तिकम्—उक्तानुक्तदुरुक्तचिन्ता वार्तिकम् ।

प्रकरणम्—शास्त्रैकदेशस्य प्रक्रिया प्रकरणम् ।

अध्यायः—अवान्तरविच्छेदा अध्यायादयः । ते तु कृतिभिः स्वतन्त्रतया प्रणीताः परिच्छेदोच्छ्वासादिसंज्ञाभृतोऽनन्ताः ।

●

## तृतीयोऽध्यायः

### काव्यपुरुषः तदुत्पत्तिश्च

पुत्रीयन्तीं तपस्यन्तीं सरस्वतीं प्रीतो विरञ्चिः "पुत्रं ते सृजामीति" प्रोवाच । सरस्वती यं सुतं सुषुवे स एव काव्यपुरुषसंज्ञया व्यवहृतः । काव्यैकरूपत्वात् तस्मिन् सारस्वतेये लक्षणया काव्यपुरुष इति संज्ञा । यतो हि स्वसुतस्य छन्दस्वतीं वाचमाकर्ण्य तमुदलापयन्ती सरस्वती प्राह—त्वदुपज्ञमथातः छन्दस्वद्वचः

प्रवत्स्यंति । अहो ! श्लाघनीयोऽसि । शब्दार्थौ ते शरीरम्, संस्कृतं मुखम्, प्राकृतं बाहुः, जघनमपभ्रंशः, पैशाचं पादौ, उरो मिश्रम् । समः-प्रसन्न-उदार-ओजस्वी चासि । उक्तिचणं च ते वचः, रस आत्मा, रोमाणि छन्दांसि, प्रश्नोत्तरप्रवह्लादिकञ्च वाक्केलिरनुप्रासोपमादयश्च त्वामलङ्कुर्वन्ति । इति ।

स्नातुमभ्रगङ्गां गतायां सरस्वत्यामेकाकिनं गण्डशैलतल्पे शयानं शिशुं सारस्वतेयं पूर्वमुशनाः स्वाश्रममनयत् । तस्य छन्दस्वद्वाचा विस्मित उशनाः "या दुग्धाऽपि…" इति श्लोकमुच्चार्य कविरिति संज्ञां लेभे । पश्चाच्च सुतमन्वेषयन्तीं विह्वलां सरस्वतीमुशनस आश्रमं प्रदर्श्य वाल्मीकिरपि सरस्वत्यानुप्रेषितछन्दस्वद्वाक् क्रन्दन्तं क्रौञ्चयुवानं वीक्ष्य "मा निषाद…" इति श्लोकमुज्जगाद । यश्चादिकविरिति संज्ञां लेभे । श्लोकस्यास्याद्याध्यायी द्वैपायनः, सारस्वतः कविः, शतसाहस्त्रीं संहितां भारतमदृभत् । एवं काव्यपुरुषस्य स्वरूपम् उत्पत्तिश्च बुध्येताम् ।

## प्रवृत्तिवृत्तिनिरूपणम्

प्रवृत्तिवृत्तिरीतीनां यथा प्रादुर्भावः यानि च नामानि तानि सरोषं प्रव्रजतः काव्यपुरुषस्यानुनयार्थमनुगच्छन्त्याः साहित्यविद्यावध्वाः वेषविलासवचनक्रममनुप्रदर्शितानि ।

प्रवृत्तिः—वेषविन्यासक्रमः प्रवृत्तिः ।

वृत्तिः—विलासविन्यासक्रमो वृत्तिः ।

रीतिः—वचनविन्यासक्रमो रीतिः ।

इति तासां लक्षणानि । तत्र प्रवृत्तयस्तु औड्रमागधी, पाञ्चालमध्यमा, आवन्ती दाक्षिणात्याश्च । उक्तञ्च भरतेनापि—

चतुर्विधा प्रवृत्तिश्च प्रोक्ता नाट्यप्रयोक्तृभिः ।
आवन्ती दाक्षिणात्या च पाञ्चाली चौड्रमागधी ॥ (ना. शा. अध्याय १३)

वृत्तयस्तु भारती-सात्वती-आरभटी-कौशिक्यश्च । तथा च रीतयस्तु-गौडीया, पाञ्चाली, वैदर्भीति तिस्रः । एवञ्च चतस्रः प्रवृत्तयो, वृत्तयश्च, तिस्रो रीतयः नाम्नाऽऽख्याताः ।

क्रमशः प्राच्याः, औड्रमागधी-भारती-गौडीयाः, पाञ्चाल्याः, पाञ्चालमध्यमासारभटी-सात्वतीपाञ्चाल्यः, अवन्त्याः आवन्ती-सकौशिकीसात्वती-मिश्रित्वेना-

दर्शितरीतयश्च, दक्षिणस्याः, दाक्षिणात्या-कौशिकी-वैदर्भ्यश्च प्रवृत्तिवृत्तिरीतयः भवन्तीति काव्यमीमांसायामभिहितम् ।

### प्रवृत्तिवृत्तीनाञ्चतुष्टयत्वमाक्षिप्य सन्धानम्

चतस्र एव प्रवृत्तयो वृत्तयश्च दर्शिताः । ताश्चेद् देशमनुजायेरन् तर्हि देशानामानन्त्यादनन्ताः प्रवृत्तयो वृत्तयः स्युः, कथं तावद् तासां चतुष्ट्वम् । यथोक्तम्—

"पृथिव्यां नानादेशाः सन्ति कथमासां चतुर्विधत्वमुपपन्नमिति"

(ना० शा० अध्याय १३)

अत्र भरतः—भारत्यारभटीसात्वतीकौशिकीति वृत्तिसंश्रितेषु अमीषु देशेषु प्रवृत्तिचतुष्टयमप्यभिनिवृत्तमिति समादधाति । एवञ्चाचार्या अनन्तान् देशान् चतुर्धा विभज्य, तेषु तेषु भागेषु तासां तासां प्रवृत्तिवृत्तिरीतीनां विन्यासक्रमं मन्वते । अतः उक्तम्—

"चतुष्टयी गतिर्वृत्तीनां प्रवृत्तीनां च, देशानां पुनः आनन्त्यं तत्कथमिव कात्स्न्येंन परिग्रहः" इत्याचार्याः । अनन्तानपि देशान् चतुर्धैवाकल्प्य कल्पयन्ति इत्युत्तरम् तेषाम् । यायावरस्तु दक्षिणात् समुद्रादुदीचीं दिशं प्रति योजनसहस्रं चक्रवर्तिक्षेत्रं मत्वा अवान्तरसामान्येन तच्चतुर्धा कल्पयति, अवान्तरविशेषैस्तु अनन्तान् इति नास्त्यनुपपत्तिः । अनन्तेषु चतुष्ट्वकल्पनापेक्षया एकस्मिन् चतुष्ट्वविभागकल्पनं श्रेय इति भावः ।

---

## चतुर्थोऽध्यायः

### शिष्यभेदः

शिष्यो द्विविधः– १–बुद्धिमान् २–आहार्यबुद्धिश्च । ताभ्यामन्यथा दुर्बुद्धिर्भवति तस्य सर्वत्र मतिविपर्यासेनानाधेयगुणान्तरत्वेन च शिष्यत्वमेव न घटते अतः द्विविधो शिष्य उक्तः । तत्र–

बुद्धिमान्—यः खलु सकृदभिधानप्रतिपन्नार्थः, स्वयं शुश्रूषते, शृणोति, गृह्णीते, धारयति, विजानात्यूहतेऽपोहति, तत्वं चाभिनिविशते, स बुद्धिमान् ।

आहार्यबुद्धिः—यः ससन्देहोऽप्रतिपत्तिश्चाप्रतिपन्नमर्थं [प्रतिपत्तुं सन्देहं च निराकर्तुं पूर्वमाचार्यान् (व्याख्यातृन्) उपतिष्ठते पश्चात् गुरुकुलमुपेत्य शुश्रूषते शृणोति गृह्णीते धारयति विजानात्यूहतेऽपोहति तत्त्वं चाभिनिविशते स आहार्यबुद्धिः । अहरहः सुगुरूपासना तयोर् बुद्धिमदाहार्यबुद्ध्योः प्रकृष्टो गुणः ।

## बुद्धिभेदः

बुद्धिस्त्रिधा—१-स्मृतिः, २-मतिः, ३-प्रज्ञा च । तत्र—

**स्मृतिः**—अतिक्रान्तस्यार्थस्य स्मर्त्री स्मृतिः ।

**मतिः**—वर्तमानस्य मन्त्री मतिः ।

**प्रज्ञा**—अनागतस्य प्रज्ञात्री प्रज्ञा ।

त्रिप्रकारेयं बुद्धिः कवीनामुपकर्त्री ।

## काव्यहेतुः

समाहितं चित्तमर्थं पश्यतीति धिया श्यामदेवः समाधिं काव्यं प्रति हेतुं मन्यते । समाधिस्तु मनस एकाग्रता । मङ्गलस्तु अभ्यासं मनुते । अविच्छेदेन शीलनमभ्यासः। अभ्यासः सर्वंगामी सर्वत्र निरतिशयं कौशलमाधत्ते । अतोऽभ्यासः काव्यं प्रति हेतुरितिभावः । यायावरस्तु शक्तिं काव्यं प्रति हेतु रिति स्वीकरोति । तन्मतनिष्कर्षस्तु—आन्तरः प्रयत्नः समाधिः, वाह्यः प्रयत्नोऽभ्यासश्च द्वावपि शक्तिमुद्भासयतः। शक्तिरिः प्रतिभाव्युत्पत्तिभ्यामपि भिन्ना । शक्त्याः प्रतिभाव्युत्पत्ती समुत्पद्येते । शक्तिं विना प्रतिभाव्युत्पत्ती एव न भवतः । शक्तस्य प्रतिभाति, शक्त ~ व्युत्पद्यते ।

## प्रतिभानिरूपणम्

**प्रतिभा**—या शब्दग्राममर्थसार्थमलङ्कारतन्त्रमुक्तिमार्गमन्यदपि तथाविधमधिहृदयं प्रतिभासयति सा प्रतिभा । अप्रतिभस्य पदार्थसार्थः परोक्ष इव प्रतिभावतः पुनरपश्यतोऽपि प्रत्यक्ष इव ।

सा प्रतिभा द्विविधा—१-कारयित्री, २-भावयित्री च ।

**कारयित्री प्रतिभा**—कवेरुपकुर्वाणा कारयित्री ।

कारयित्री त्रिविधा—१-सहजा, २-आहार्या, ३-औपदेशिकी च ।

**सहजा**—जन्मान्तरसंस्कारापेक्षिणी सहजा । ऐहिकेनाल्पसंस्कारेणेयमुद्बुध्यते ।

**आहार्या**—जन्मसंस्कारयोनिराहार्या। ऐहिकेन महता संस्कारेणेयमुद्बुध्यते।

**औपदेशिकी**—मन्त्रतन्त्राद्युपदेशप्रभवा औपदेशिकी। अस्याः पुनरैहिक एव उपदेशकालः, ऐहिक एव संस्कारकालः।

सहजाहार्ययोः प्रतिभयोः संस्कारयोनित्वम्, औपदेशिक्यां तु संस्कारो न भवति। चेत् संस्कारोऽवश्यमेव प्रतिभायां स्वीक्रियेत तदानीमैहिक एव संस्कार, अत्र कल्प्यताम् इति भावः। अर्थात् यावदुपदेशं तथा च यावदभ्यासमत्र सा प्रभवति।

एवञ्च तिसृभिः प्रतिभाभियुंक्ताः कवयः क्रमशः सारस्वत आभ्यासिक औपदेशिकश्च भवन्ति। तत्र

**सारस्वतः कविः**—जन्मान्तरसंस्कारप्रवृत्तसरस्वतीको बुद्धिमान् सारस्वतः।

**आभ्यासिकः कविः**—इहजन्माभ्यासोद्भासितभारतीकः आहार्यबुद्धिराभ्यासिकः।

**औपदेशिकः**—उपदेशितदर्शितवाग्विभवो दुर्बुद्धिरौपदेशिकः।

तत्र सारस्वताभ्यासिकौ संस्काराय तन्त्रादिकं नोपासाताम् अनावश्यकत्वादिति आचार्याः। न इति यायावरीयः, यतो हि एकस्मै क्रियाद्वयं द्वैगुण्याय सम्पद्यते।

एतेषां तारतम्याय पूर्वः पूर्वः श्रेयान् इति श्यामदेवः "उत्कर्षः श्रेयान् नैकगुणस्योत्कर्षः, उत्कर्षे तु बहुगुणसन्निपातोऽपेक्ष्यते" इति यायावरः। तथा च—

> बुद्धिमत्वं च काव्याङ्गविद्यास्वभ्यासकर्म च।
> कवेश्चोपनिषच्छक्तिस्त्रयमेकत्रदुर्लभम्॥
> काव्यकाव्याङ्गविद्यासु कृताभ्यासस्य धीमतः।
> मन्त्रानुष्ठाननिष्ठस्य नेदिष्ठा कविराजता॥ इति

अतः एकार्थंप्रति क्रियाद्वयं क्रियात्रयं वा तस्य महत उत्कर्षाय भवति "उत्कृष्ट एव श्रेयान्" इति यायावरमतम्।

**भावयित्री प्रतिभा**—भावकस्योपकुर्वाणा भावयित्री। सा हि कवेः श्रममभिप्रायं च भावयति। तया खलु कवेर्व्यापारतरुः फलवान् भवति, तदभावे

स तरुर्वन्ध्य एव । यतो हि भावयित्रीप्रतिभासम्पन्नो भावक एव कवेः सर्वस्वं भवति । यथोक्तम् ।—

स्वामी मित्रं च मन्त्री च शिष्यश्चाचार्य एव च ।
कवेर्भवति हो चित्र किं हि तद् यन्न भावकः ॥ इति

मङ्गलमते भावकास्तु द्विविधा भवन्ति । १–अरोचकिनः सतृणाभ्यवहारिणश्च ! न केवलं भावकाः कवयोऽपि भवन्ति इति वामनीयाः । यायावरीयैस्तु भावका न केवलं द्विधा अपितु चतुर्धेति उच्यते । १–अरोचकिनः २–सतृणाभ्यवहारिणः, ३–मत्सरिणः, ४–तत्त्वाभिनिवेशिनश्च । तेषु वामनीयाः, "अरोचकिनो भावकाः कवयश्च विवेकिनः, सतृणाभ्यवहारिणस्तु ते अविवेकिनः भवन्ती"ति वदन्ति ।

अरोचकिनां अरोचकिताऽपि द्विधा—१–नैसर्गिकी २– ज्ञानयोनिश्च नैसर्गिकीमरोचकितामरोचकिनः संस्कारशतेनाऽपि न जहति । ज्ञानपूर्विकायांतु अरोचकितायां विशिष्टे वचसि रोचकितावृत्तिरेव भवति ।

सतृणाभ्यवहारिता सर्वसाधारणी यतो हि सर्वस्यैव व्युत्पित्सोः कौतुकिनः सर्वत्र च सा प्रथमं भवति । विवेकविकला हि गुणागुणयोर्विभागसूत्रं न पातयति । विवेकानुसारेणैव बुद्धयः मधु निष्यन्दन्ते । तेनैव कश्चन परिणामे यथार्थदर्शी भवति । विभ्रमभ्रंशश्च निःश्रेयसाय भवति ।

मत्सरिणां तु परगुणेषु वाचंयमत्वात् प्रतिभातमपि न प्रतिभातमिव । अमत्सरी ज्ञाता च विरलः । यथोक्तम्—

"यः सम्यग् विविनक्ति दोषगुणयोः सारं स्वयं सत्कविः ।
सोऽस्मिन् भावक एव नास्त्यथ भवेद्दैवान्न निर्मत्सरः ॥ इति

तत्त्वाभिनिवेशी तु मध्येसहस्रं यद्येकस्तदुक्तम्—

"शब्दानां विविनक्ति गुम्फनविधीनामोदते सूक्तिभिः,
सान्द्रं लेढि रसामृतं विचिनुते तात्पर्यमुद्रां च यः ।
पुण्यैः संघटते विवेक्तृविरहादन्तर्मुखं ताम्यतां,
केषामेव कदाचिदेव सुधियां काव्यश्रमज्ञो जनः ॥ इति ।

एवञ्च तत्त्वाभिनिवेशी शब्दार्थालङ्काररसतात्पर्यमुद्रादिविवेचननिपुणः कवेः श्रमज्ञो भवति ।

## पञ्चमोऽध्यायः

### व्युत्पत्तिप्रतिभयोः का श्रेयसी

व्युत्पत्तिः—बहुज्ञता, समधिकशास्त्रज्ञता वा व्युत्पत्तिः। व्युत्पत्तिरियं काव्यमाता। शक्त्याः प्रतिभा, व्युत्पत्तिश्चेति द्वे कर्मणी। तत्र कारयित्रीभावयित्रीति प्रतिभा पूर्वं निरूपिता। कवेर्वाचः सर्वगामित्वेन, व्युत्पत्तिः काव्यं प्रति प्रधानं हेतुः प्रतिभापेक्षया इति मङ्गलः। 'व्युत्पत्तिः श्रेयसी' इति मङ्गल। "प्रतिभा श्रेयसी" इत्यानन्दमतम्। एते प्रतिभाव्युत्पत्ती शक्तेः प्रादुर्भूय काव्यं प्रादुर्भावयतः। तत्र बहुज्ञता व्युत्पत्तिरित्यपेक्षया, उचितानुचितविवेको व्युत्पत्तिरिति यायावरमतम्।

आनन्दमते "प्रतिभायाः श्रेयस्त्वे" प्रमाणम् तु—

अव्युत्पत्तिकृतो दोषः शक्त्याः संव्रियते कवेः।<br>
यस्त्वशक्तिकृतस्तस्य झगित्येवावभासते॥ इति।

अत्र शक्त्या प्रतिभा गृह्यते शुद्धया लक्षणया, घृतेनायुर्ग्रहणवत्। मङ्गलेन तु व्युत्पत्तेः श्रेयस्त्वे—

कवेः संव्रियतेऽशक्तिर्व्युत्पत्त्या काव्यवर्त्मनि।<br>
वैदग्धीचितचित्तानां हेया शब्दार्थगुम्फना॥

इत्युक्तिः प्रमाणत्वेन न्यस्ता। उदाहरणे तु मूले द्रष्टव्ये। यायावरीयः, "प्रतिभाव्युत्पत्ती मिथः श्रेयस्यौ" इति स्वीकरोति। यतो हि लावण्यरूपसम्पद्भ्यामेव महत्सौन्दर्यं न त्वेकतरेण। निरवद्यम् उदाहरणन्तु यथा जङ्घाकाण्डेति मूलग्रन्थे व्याख्यातम्। निरवद्यताऽपि तत्रैव दर्शिता।

एवं प्रतिभाव्युत्पत्त्योरेकतरस्य श्रेयस्त्वं परिहाय उभयोर्योगस्य श्रेयस्त्वं सिद्धान्ततः प्रदर्श्याह—प्रतिभाव्युत्पत्तिमांश्च कविर्भवतीत्याह।

### कवीनां भेदस्तारतम्यञ्च

कविस्त्रिधा—१–शास्त्रकविः २–काव्यकविः ३–उभयकविः।

एतेषूत्तरोत्तरो गरीयान् इति श्यामदेवः। शास्त्रकाव्यकव्योर्नास्ति तारतम्यमिति यायावरीयः। यथा न राजहंसः चन्द्रिकापानाय, चकोरश्च नीरक्षीरविवेकाय प्रभवति तथैव शास्त्रकविः न काव्यकविकर्मणे प्रभवति, न च काव्य-

कविः शास्त्रकविकर्मणे। शास्त्रकविः स्वशास्त्रकाव्यं रससम्पदा विभूषयति, काव्यकविश्च स्वकाव्ये शास्त्रीयं तर्ककर्कशमर्थमुक्तिवैचित्र्येण श्लथयति। एवञ्चोभयोरुपकार्योपकारकभावः। न चैकमात्रप्रवणता कवेरनुग्रहाय भवति। यथोक्तम्—

यच्छास्त्रसंस्कारः काव्यमनुगृह्णाति शास्त्रैकप्रवणता तु निगृह्णाति। काव्यसंस्कारोऽपि शास्त्रवाक्यपाकमनुरुणद्धि काव्यैकप्रवणता तु विरुणद्धि।

एवञ्चोभयत्र परं प्रवीणो वरीयान् स्यात्।

शास्त्रकविस्त्रिधा—१-यः शास्त्रं विधत्ते स एकः। २—यश्च शास्त्रे काव्यं विधत्ते स द्वितीयः। ३—योऽपि काव्ये शास्त्रार्थं निधत्ते स तृतीयः।

काव्यकविः पुनरष्टधा—१—रचनाकविः, २—शब्दकविः ३—अर्थकविः, ४—अलङ्कारकविः, ५—उक्तिकविः ६—रसकविः, ७—मार्गकविः, ४—शास्त्रार्थकविश्च।

एषां कवीनां द्वित्रैः गुणैर्युक्तः कनीयान् भवति, पञ्चकैर्गुणैर्युक्तः मध्यमः, एवं सर्वैर्गुणैर्युक्तो महाकविर्भवति।

## कवीनामवस्था

सर्वेषां कवीनां दश अवस्था भवन्ति, तथा च तत्तदवस्थापन्ना दश कवयोऽपि। यथा—१—काव्यविद्यास्नातकः २—हृदयकविः, ३—अन्यापदेशी, ४ सेविता, ५—घटमानः, ६—महाकविः, ७—कविराजः, ८—आवेशिकः, ९—अविच्छेदी, १०—संक्रामयिता च। तत्र

काव्यविद्यास्नातकः—यः कवित्वकामः काव्यविद्यापविद्याग्रहणाय गुरुकुलान्युपास्ते स विद्यास्नातकः।

हृदयकविः—यो हृदय एव कवते (हृदय एव) निह्नुते स हृदयकविः।

अन्यापदेशी—यः स्वकीयमपि काव्यं दोषभयादन्यस्येति अपदिश्य पठति सोऽन्यापदेशी।

सेविता—यः कवित्वे प्रवृत्तवचनः, पौरस्त्यानामन्यतमच्छायामभ्यस्यति स सेविता।

घटमानः—यो निर्दोषं कवते किन्तु प्रबन्धे न घटयति स घटमानः।

महाकविः—यो गद्यपद्ययोरन्यतरस्य प्रबन्धे समर्थः स महाकविः।

कविराजः—यस्तु तत्र तत्र भाषाविशेषे तेषु प्रबन्धेषु तस्मिंस्तस्मिंश्च रसे स्वतन्त्रः स कविराजः। कविराजा निखिले विश्वेऽपि अल्पीयांस एव।

आवेशिकः—यो मन्त्राद्युपदेशवशाल्लब्धसिद्धिरावेशसमकालमेव कवते स आवेशिकः।

अविच्छेदी—विच्छेदं विवेकं, उचितानुचितविभागं वा विनैव यो कवते सोऽविच्छेदी। अविच्छेदिनः सतृणाभ्यवहारित्वं सिद्धम् तेन "कवयोऽपि भवन्ति" इति वामनीयोक्तिः संगच्छते। अत उच्यते यो यदेवेच्छति तदेवाविच्छिन्नवचनः सोऽविच्छेदी इति।

संक्रामयिता—यः सिद्धमन्त्रः कन्यासु कुमारेषु सरस्वतीं संक्रमय्य कवते स संक्रामयिता।

एतेषु अन्तिमास्तिस्रोऽवस्था औपदेशिकस्य भवन्ति आद्याश्च सप्तबुद्धि-मदाहार्यबुद्ध्योरिति।

### वाक्यपाकः

पाकः—सुपां तिङां च श्रवःप्रियव्युत्पत्तिरूपपरिणामापरपर्यायः पाक इति मङ्गलः। न इत्याचार्याः। श्रवःप्रिया व्युत्पत्तिस्तु सौशब्द्यमात्रम् न पाकः। पाकस्तु पदनिवेशनिष्कम्पतेति। तदाहुः—"पदानां स्थापिते स्थैर्ये हन्त सिद्धा सरस्वती" इति। वामनीयानां मते पदस्थैर्यपर्यवसितिराग्रहेणापि सम्भवतीत्यतः पदानां परिवृत्तिवैमुख्यं पाकः। तदाहुः—

"यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम्।
तं शब्दन्यासनिष्णाताः शब्दपाकं प्रचक्षते"॥ इति।

अवन्तीसुन्दरी पदानां परिवृत्तिवैमुख्यं पाकं न मन्यते अपि तु अशक्तिः। तत्र हेतुस्तु "एकस्मिन्नर्थे महाकवीनामनेकोऽपि पाठः परिपाकवान् भवती"ति दर्शयति। तथा च "रसोचितशब्दार्थसूक्तिनिबन्धनः पाकः" इति स्वीकरोति। निबन्धनेन ग्रथनक्रमोऽभिधीयते। अर्थात् कश्चनापूर्वः गुणादीनां ग्रथनक्रम एव पाको भवति। यदाह—

गुणालङ्काररीत्युक्तिशब्दार्थग्रथनक्रमः।
स्वदते सुधियां येन वाक्यपाकः स मां प्रति॥
सति वक्तरि सत्यर्थे शब्दे सति रसे सति।
अस्ति तन्न विना येन परिस्रवति वाङ्मधु॥ इति

यायावरीयस्तु-पाकः अभिधाया अविषयः कार्यानुमेयतया, व्यङ्ग्यतयेत्यर्थः, यत्तद्शब्दाभ्यां निवेद्यमानः विलक्षण एव कश्चन । इति लक्षयति । यथा— "तन्मञ्जुमन्दहसितं श्वसितानि तानि सा वै कलङ्कविधुरा मधुराननश्रीः" इत्यत्र तद्पदनिवेद्यः कश्चन वाचामविषयः सहृदयहृदयगम्यः अनुभवैकगोचरः पाकः । पाकोऽयं अभिधाया अविषयोऽपि सहृदयप्रसिद्धि सिद्ध इति व्यवहाराङ्गमपि ।

### पाकभेदः

पाकोऽयं नवधा । तेषु-पिचुमन्द–वार्ताक–क्रमुकपाकाः त्याज्याः बदर–तित्तिडीक–त्रपुसपाकाः संस्कार्याः । मृद्वीकासहकारनारिकेलपाकाः ग्राह्याः । एते एव नवपाकाः । एकोऽनवस्थितपाकोऽपि भवति यं कपित्थपाक इति भामहादय आमनन्ति । तत्र पलालधूननेनान्नकणलाभवत्सुभाषितलाभो भवति । यस्तु पृथक्तया न निर्दिष्टः । उक्तम्—

सम्यगभ्यस्यतः काव्यं नवधा परिपच्यते ।
हानोपादानसूत्रेण विभजेत्तद्धि बुद्धिमान् ॥ इति ।

●

## प्रथम अध्याय

यह अध्याय "अथातः काव्यं मीमांसिष्यामहे" से आरम्भ है । इस प्रकार ग्रन्थ का आरम्भ दर्शनशास्त्रों में मिलता है प्रारम्भ का अर्थ शब्द ओंकार के समान पवित्र एवं मङ्गलवाचक माना गया है तथा इसके बाद अतः शब्द अधिकारसूचक जैसे —अथातो ब्रह्मजिज्ञासा, अथातो धर्मजिज्ञासा आदि ।

इस अध्याय में काव्य का सम्बन्ध श्रीकण्ठ एवं परमेष्ठी से किया गया है । सर्वप्रथम श्रीकण्ठ ने इस काव्यका उपदेश अपने शिष्यों में किया है । प्रायः अनेक शास्त्र उनकी अनादि–परम्परा को कायम रखने के लिए ब्रह्मा या शिव से ही प्रोक्त दिखलाये गए हैं । इससे इनकी प्रामाणिकता भी सिद्ध होती है । इसके बाद शिष्य परम्परा का क्रम चलता है इसे गुरुपर्वक्रम कहा जाता है ।

इसकी प्रामाणिकता का दूसरा आधार वेद से सम्बन्ध स्थापन है । इसके बिना शास्त्र अवैदिक होने से उपेक्षित भी माने जाते हैं । अतः काव्य का प्रथम

दर्शन वेदों में ही माना गया है। छन्दोमयी वाणी अपौरुषेय वेद में ही सर्वप्रथम उपलब्ध होने से वेद भी काव्य ही है। ये बातें अतिरिक्त हैं कि उसकी नीरसता, अर्थकर्कशता को समझकर ग्रन्थकार ने काव्य का साहित्यविद्या वधू से सम्बन्ध कराकर उसे सरसता प्रदान की है। सभी आख्यानक सारगर्भित एवं विषय-वस्तु के समर्थन में पूर्ण क्षम दीख पड़ते हैं।

प्रथम अध्याय का नाम शास्त्र संग्रह है सर्वप्रथम श्रीकण्ठ से परमेष्ठी आदि चौसठ शिष्यों में काव्यका उपदेश दर्शाया गया है इसके बाद परमेष्ठी ब्रह्मा का अयोनिज अपने शिष्यों में काव्य का उपदेश दिखलाया गया है, उन शिष्यों में काव्यपुरुष सारस्वतेय भी एक है जो देवताओं से भी वन्दनीय है। ब्रह्माने उसे काव्यप्रचार के लिए नियुक्त किया। काव्यपुरुष ने दिव्यविद्यास्नातकों को अष्टादशाधिकरणी काव्यविद्या का उपदेश विस्तार से किया। उन अठारहों अधिकरणों में सहस्त्राक्ष ने कविरहस्य अधिकरण, उक्तिगर्भ ने औक्तिक, सुवर्णनाभने रीतिनिर्णय, प्रचेता ने आनुप्रासिक, यमने यमक, चित्राङ्गद ने चित्र, शेष ने शब्दश्लेष, पुलस्त्य ने वास्तव, औपकायन ने औपम्य, पराशर ने अतिशय, उतथ्य ने अर्थश्लेष, कुबेर ने उभयालङ्कारिक, कामदेव ने वैनोदिक भरत ने रूपकनिरूपण, नन्दकेश्वर ने रसाधिकारिक, धिषण ने दोषाधिकरण, उपमन्यु ने गुणौपदानिक, तथा कुचमार ने औपनिषदिक अधिकरण का सम्यग् ज्ञानकर उनकी रचना की। इस प्रकार प्रकीर्ण ये विषय कुछ उच्छिन्न हो गए। सभी को संगृहीत कर ग्रन्थकार ने अष्टादशाधिकरणी का प्रणयन किया है। इस प्रकार अष्टादशाधिकरणी काव्यमीमांसा का पहला अधिकरण मात्र उपलब्ध होता है जो कविरहस्य है, इसको अठारह अध्यायों में, शास्त्र संग्रह, शास्त्रनिर्देश, काव्यपुरुषोत्पत्ति, पदवाक्यविवेक, पाठप्रतिष्ठा, अर्थानुशासन, वाक्यविधि, कविविशेष, कविचर्या, राजचर्या, काकुप्रकार, शब्दार्थहरणोपाय, कविसमय, देशकालविभाग तथा भुवनकोष विषयवस्तु वर्णित है। इन पन्द्रह विषयों को अठारह अध्यायों में दर्शाया गया है।

•

## द्वितीय अध्याय

वाङ्मय के दो भेद हैं शास्त्र और काव्य। शास्त्र के दो भेद हैं अपौरुषेय ( पुरुषकृतभिन्न ) और पौरुषेय ( पुरुषकृत )। श्रुति ( वेद ) के दो भेद हैं—

मन्त्र और ब्राह्मण। जिससे क्रियातन्त्र ( कर्मकाण्ड ) का निरूपण किया जाता है उसे "मन्त्र" कहते हैं। जो मन्त्रोंका, स्तुति, निन्दा और व्याख्यान, विनियोग ग्रन्थ है उसे "ब्राह्मण" कहते हैं।

ऋग्वेद, यजुर्वेद और सामवेद इनको "त्रयी" कहा जाताहै। अथर्ववेद को चतुर्थवेद कहते हैं। जिसके मन्त्र छन्दोबद्ध होते हैं उसे "ऋग्वेद", जिसमें गानयुक्त मन्त्र होते हैं उसे "सामवेद" और छन्द और गान से रहित मन्त्र जिसमें है उसे "यजुर्वेद" कहते हैं। इस प्रकार ऋग्वेद, यजुर्वेद, सामवेद और अथर्ववेद ये चार वेद हैं। इतिहास-वेद, धनुर्वेद, गान्धर्ववेद और आयुर्वेद ये चार उपवेद हैं।

वेद और उपवेद ही जिसका स्वरूप है ऐसा नाट्यवेद पञ्चम-वेद है, यह सार्ववर्णिक अर्थात् द्विज—ब्राह्मण, क्षत्रिय और वैश्य इन तीनों का ही न होकर सबके लिए है। द्रौहिणि द्रुहिण ( ब्रह्मा ) के शिष्य भरतमुनि का ऐसा मत है।

शिक्षा, कल्प, व्याकरण, निरुक्त, छन्द और ज्यौतिष ये छः वेदाङ्ग हैं ऐसा आचार्य कहते हैं।

उपकारक होने से अलङ्कारशास्त्र वेद का सप्तम अङ्ग है यह यायावरीय-( राजशेखर ) का मत है। पौरुषेय शास्त्र—पुराण, आन्वीक्षिकी (न्यायशास्त्र) मीमांसा और स्मृति तन्त्र (धर्मशास्त्र) ये चार शास्त्र हैं।

वेद के आख्यानों का जिसमें उपनिबन्ध है उसे 'पुराण' कहते हैं। ब्रह्मपुराण आदि कुल अट्ठारह पुराण हैं।

पुराण का ही भेदविशेष 'इतिहास' है, ऐसा कुछ विद्वान् मानते हैं। इतिहास के भी दो भेद हैं—परिक्रिया और पुराकल्प। एक नायक जिसमें वर्णित होता है वह 'परिक्रिया' है जैसे-'रामायण'। बहुत-से नायक जिसमें वर्णित होते हैं उसे 'पुराकल्प' कहते हैं, जैसे-महाभारत। वेद-वाक्यों का न्यायों से विवेचन करने वाली को 'मीमांसा' कहते हैं, उसके भी दो भेद हैं—विधि का विवेचन करने वाली (पूर्वमीमांसा) और ब्रह्म का विवेचन करनेवाली (उत्तरमीमांसा)। श्रुतिके अर्थ का स्मरण कर निबन्धन करने से स्मृति (धर्मशास्त्र) मुख्यतः अट्ठारह हैं। चार वेद, छः वेदाङ्ग और चार शास्त्र इस प्रकार ये चौदह विद्यास्थान हैं, ऐसा आचार्यों का कथन है।

समस्त विद्यास्थानों का एकमात्र आधार काव्य पन्द्रहवां विद्यास्थान है ऐसा यायावरीय (राजशेखर) कहते हैं। वह गद्यपद्यमय, कविधर्म और हितका उपदेशक भी है। वह शास्त्रों का अनुसरण करता है। वार्ता (जीविका-विधायक शास्त्र', कामसूत्र, शिल्पशास्त्र और दण्डनीति इस प्रकार पहले की चौदह विद्या-स्थानों का संकलन कर अट्ठारह विद्यास्थान होते हैं ऐसा अन्य विद्वान् मानते हैं।

आन्वीक्षिकी (तर्कशास्त्र) त्रयी (वेद) वार्ता और दण्डनीति (राजशास्त्र ये चार विद्यायें हैं।

'दण्डनीति' यही एक विद्या है ऐसा औशनस अर्थात् उशना (शुक्र आचार्य) के अनुयायी कहते हैं। क्योंकि दण्ड (सजा) के भय से सम्पूर्ण जन अपने-अपने कर्मों में लगे रहते हैं। बृहस्पति के अनुयायी वार्ता और दण्डनीति दो विद्यायें मानते हैं। मनु के अनुयायी इनमें वेद को भी सम्मिलित कर तीन विद्याओं को मानते हैं। इनमें आन्वीक्षिकी (तर्कशास्त्र) को सम्मिलित कर कौटिल्य चार विद्याओं को मानते हैं। साहित्य पञ्चमी विद्या है ऐसा यायावरीय मानते हैं। क्योंकि वह चारों विद्याओं का निचोड़ है। आन्वीक्षिकीके दो भेद होते हैं। उनमें १. अर्हद्दर्शन (जैनदर्शन), २. भदन्तदर्शन (बौद्धदर्शन) और ३. लोकायत (चार्वाकदर्शन) ये पूर्वपक्ष हैं। १. सांख्य, २. न्याय और ३. वैशेषिक, ये तीन उत्तरपक्ष हैं। इस प्रकार ये छः तर्कशास्त्र हैं। इनमें तीन कथायें होती हैं—वाद, जल्प और वितण्डा। इन शास्त्रों की सूत्र, वृत्ति, पद्धति, भाष्य, समीक्षा, टीका, पञ्जिका, कारिका और वार्त्तिकसे रचना होती है। शब्द और अर्थ इनके सहभाव से रचित विद्या को 'साहित्यविद्या' कहते हैं। उपविद्या चौसठ हैं, उन्हें कला कहते हैं। वह काव्य का जीवनभूत है।

●

## तृतीय अध्याय

देवगुरु बृहस्पति ने शिष्यों को कहा कि पूर्वकालमें पुत्रप्राप्ति के लिए सरस्वती ने हिमालय पर्वत पर तपस्या की। ब्रह्माजी ने प्रसन्न होकर उनको पुत्रप्राप्ति के लिए वर दिया। तब सरस्वती ने काव्यपुरुष को उत्पन्न किया। उन्होंने उत्पन्न होते ही

पद्यमयी वाणी से माता की स्तुति की। सरस्वती अपने पुत्र की प्रशंसा कर उन्हें प्रस्तरपर रखकर आकाशगंगा में स्नान करने के लिए गयीं। उसी समय कुश और समिधाओं को लाने के लिए आए शुक्राचार्य उन्हें अपने आश्रम में ले आए। काव्य-पुरुष ने उनमें छन्दोमयी वाणी का संचार कराया। तभी से उन्हें (शुक्राचार्यको) भी 'कवि' कहा जाने लगा। स्नान कर लौटी हुई सरस्वती अपने पुत्र को न देखकर क्रन्दन करने लगी। प्रसङ्गवश आये हुए वाल्मीकि ने उन्हें शुक्राचार्य का आश्रम-स्थान दिखला दिया। वहाँ से लौटे वाल्मीकि ने व्याध से क्रौञ्चदम्पति में से मारे गये एक कौञ्च को देखकर अकस्मात् शोक से आकुल हो, 'मा निषाद०' इस श्लोक को कहा। सरस्वती ने प्रसन्न होकर उसको पाठ करने से कवित्वप्राप्ति का वर दिया। तभी वाल्मीकि ने रामायण बनाया। उक्त श्लोक को पाठ करने से व्यास ने भी लक्षश्लोकात्मक महाभारत की रचना की।

एक बार ऋषि और देवताओं के वादविवाद में ब्रह्माजी ने सरस्वती को निर्णय करने के लिए नियुक्त किया। काव्यपुरुष को अपने साथ जानेमें तत्पर देख-कर सरस्वती उन्हें निषेध कर स्वयं उस सभा में चली गईं। तब काव्यपुरुष रूठकर बाहर जाने लगा। काव्यपुरुष के प्रियमित्र कार्त्तिकेय को रोते देखकर पार्वती ने काव्यपुरुष को वश में करने के लिए साहित्यविद्यावधू को उत्पन्न कर उन्हें आज्ञा दी कि तुम अपने धर्मपति (काव्यपुरुष) को अनुरक्त कर लौटाओ, काव्यविद्या के स्नातक मुनियों को भी 'साहित्यविद्यावधू और काव्यपुरुष के चरित्रकी स्तुति करो वह तुम्हारा काव्यसर्वस्व होगा,ऐसा आदेश दिया। काव्यपुरुष की यात्रा पहले पूर्व दिशा में हुई, साहित्यविद्यावधू ने भी उनका अनुसरण किया, उन्होंने जैसा वेष लिया वहाँ की स्त्रियों ने वैसा ही वेश लिया। वह औड्रमागधी प्रवृत्ति हुई। उनके अनुसार भारतीवृत्ति और गौडी रीति का प्रादुर्भाव हुआ। तब काव्यपुरुष की पाञ्चालदेश में यात्रा हुई, वहाँ पाञ्चालमध्यमा प्रवृत्ति, सरस्वती वृत्ति और पाञ्चाली रीति का प्रादुर्भाव हुआ। काव्यपुरुष का अवन्तीदेशमें गमन हुआ, वहाँके वेष के अनुसार आवन्ती प्रवृत्ति और सात्त्वती तथा कौशिकी वृत्तिका प्रादुर्भाव हुआ। तब काव्य-पुरुष की दक्षिण देश में यात्रा हुई, वहाँ दाक्षिणात्य प्रवृत्ति, कौशिकी वृत्ति और वैद-र्भीरीति का प्रादुर्भाव हुआ। वहीं साहित्यवधू ने काव्यपुरुष को वश में कर लिया। विदर्भ देशमें वत्सगुल्म नगर में उन दोनों का गन्धर्व विवाह हुआ। हिमालय पर

लौटकर दोनों ने पार्वती और सरस्वती का अभिवादन किया। उनके आशीर्वाद से उन्होंने कवि के मन में निवास किया तथा कविलोकरूप स्वर्ग की सृष्टि की।

●

## चतुर्थ अध्याय

शिष्य के दो भेद होते हैं—बुद्धिमान् और आहार्यबुद्धि। स्वभावतः जिसकी बुद्धि शास्त्र का अनुसरण करती है वह बुद्धिमान् है और शास्त्र का अभ्यास जिसकी बुद्धि संस्कृत करता है वह आहार्यबुद्धि है उससे विपरीत बुद्धिवाला दुर्बुद्धि है। बुद्धि के भी तीन भेद हैं—स्मृति, मति और प्रज्ञा। व्यतीत विषय-का स्मरण करने वाली 'स्मृति' वर्तमान विषय का मनन करने वाली 'मति' और अनागत = होनेवाले विषयों का ज्ञान कराने वाली 'प्रज्ञा' है। काव्यकर्म में मुख्य सहायक 'समाधि' है यह श्यामदेव का मत है। मन की एकाग्रता को समाधि कहते हैं। काव्यकर्म में मुख्य सहायक 'अभ्यास' है यह 'मङ्गल' कहते हैं। राजशेखर के मतमें एकमात्र शक्ति ही काव्य में हेतु है। प्रतिभा और व्युत्पत्ति से शक्ति भिन्न है। शक्ति ही प्रतिभा और व्युत्पत्ति को उत्पन्न करती है शक्ति से युक्त कविको ही प्रतिभा और व्युत्पत्ति होतीं हैं। प्रतिभाशाली कवि अप्रत्यक्ष विषयका भी प्रत्यक्षकी तरह वर्णन करते हैं। मेधावी रुद्र और कुमारदास आदि कवि जन्म से ही अन्धे थे ऐसा सुना जाता है प्रतिभा के दो भेद होते हैं कार-यित्री और भावयित्री। कवि का उपकार करने वाली प्रतिभा कारयित्री है। उसके भी तीन भेद होते हैं–सहजा, आहार्या और औपदशिकी। इनसे युक्त कवि क्रम से सारस्वत, आभ्यासिक और औपदेशिक कहलाते हैं। भावक के चार भेद होते हैं—अरोचकी, सतृणाभ्यवहारी, मत्सरी और तत्त्वाऽभिनिवेशी। इनमें तत्त्वा-भिनिवेशी बहुत ही विरल होते हैं। भावकके विषयमें अन्तमें कुछ संग्रह श्लोक हैं।

●

## पञ्चम अध्याय

प्रतिभा और व्युत्पत्ति में आचार्यों का मतभेद-प्रदर्शन कर इनके तारतम्य मतान्तर दिखाकर कुछ उदाहरण भी दिये गये हैं। कवियों के तीन भेद हैं, जैसे शास्त्रकवि, काव्यकवि और उभयकवि। इनके उदाहरण भी दिये गये हैं। फिर कवियों के आठ भेद दिखलाये गये हैं, जैसे—रचनाकवि, शब्दकवि, अर्थकवि, अलङ्कारकवि, उक्तिकवि, रसकवि, मार्गकवि और शास्त्रार्थकवि। इनमें रचनाकवि-का उदाहरण दिया गया है। शब्दकवि के तीन भेद हैं—नामकवि, आख्यातकवि और उभय (नाम आख्यात) कवि। तीनों के उदाहरण हैं। अर्थकवि का उदाहरण भी प्रस्तुत है। अलङ्कारकवि के दो भेद हैं--शब्दाऽलङ्कारकवि और अर्थाऽ-लङ्कारकवि। दोनों के उदाहरण दिये गये हैं। उक्तिकवि, रसकवि, मार्गकवि और शास्त्रार्थकवि इन सबके उदाहरण प्रस्तुत किये गये हैं।

कवि की दश अवस्थाओं का वर्णन कर फिर कवि के दश भेद दिखलाये गये हैं--काव्यविद्यास्नातक, हृदयकवि, अन्याऽपदेशी, सेविता, घटमान, महाकवि, कविराज, आवेशिक, अविच्छेदी और संक्रामयिता। इनके लक्षण भी प्रदत्त हैं। अन्त में पाकविवेक किया गया है। पाक के नौ भेद दिये गये हैं, जैसे--पिचुमन्द-( निम्ब ) पाक, बदरपाक, मृद्वीकापाक, वार्ताकपाक, तिन्तिडीकपाक, सहकार-पाक, क्रमुकपाक, त्रपुसपाक और नालिकेरपाक। इसप्रकार काव्य के दो भेद होते हैं। इनमें तीन त्रिकों में पहले के त्रिक त्याज्य हैं और शेष ग्राह्य हैं। अनवस्थित पाक कपित्थपाक कहा गया है।

इसप्रकार पाँचों अध्यायों में उपन्यस्त विषयों का सिंहावलोकन किया गया है।

॥ श्रीः ॥

राजशेखरविरचिता

# काव्यमीमांसा

शिखाख्यव्याख्यासहिता

—:-०-:—

## कविरहस्यम्

### प्रथमोऽध्यायः

### शास्त्रसंग्रहः

अथातः काव्यं मीमांसिष्यामहे यथोपदिदेश श्रीकण्ठः परमेष्ठि-वैकुण्ठादिभ्यश्चतुःषष्टये शिष्येभ्यः। सोऽपि भगवान्स्वयम्भूरिच्छाज-

---

शिखा—अथशब्दः मङ्गलार्थकः। अतः इति सार्वविभक्तिकस् तसिल् प्रत्ययः। अत्रेत्यर्थः अथवा अथानन्तरमतः शब्दोऽधिकारसूचकः। काव्यं कवृवर्णे इति धातोर् निष्पन्नस्य कवेरिदं कर्म, काव्यव्यपदेशभागिति। मीमांसिष्यामहे = अन्वाख्यास्याम इत्यर्थः। काव्यान्वाख्यानप्रतिज्ञानानन्तरं सुकवि सम्प्रदायस्याविच्छेदस्तत्तदाकरग्रन्थेभ्यः संकलय्योपस्थापयति महाकविः श्रीमद्राजशेखरः। काव्यस्यावैदिकत्वं परम्पराशून्यत्वं वा परिहर्तुं श्रीकण्ठेनोपदेश्यत्वं दर्शयति—यथा = येनप्रकारेण—श्रीकण्ठः = भगवान्शिवः, परमेष्ठि—वैकुण्ठाद्यभिधेभ्यः, चतुःषष्ठये = चतुःषष्टिसंख्याकेभ्यः, शिष्येभ्यः, उपदिदेश = उपदिष्टवान् तथैव मिमांसिष्यामहे इत्यन्वयः। सम्प्रदायाविच्छेद्यत्वं दर्शयन्नाह—सोऽपि = भगवान् परमेष्ठी अपि, परमेष्ठ्येवानूद्यते भगवान् स्वयम्भूरितिपदेन

---

भगवान् श्रीकण्ठ ने परमेष्ठी वैकुण्ठादि चौसठ शिष्यों को जिस प्रकार उपदेश दिया है उसे आधार बनाकर मैं यहाँ काव्य की मीमांसा करूँगा। भगवान् श्री कण्ठ अपने चौसठ शिष्यों को, तथा उनमें परमेष्ठी भगवान् स्वयम्भू, स्वेच्छया उत्पन्न अपने शिष्यों को काव्य का उपदेश दियें। उन परमेष्ठी

न्मभ्यः स्वान्तेवासिभ्यः। तेषु सारस्वतेयो वृन्दीयसामपि वन्द्यः काव्यपुरुष आसीत्। तं सर्वसमयविदं दिव्येन चक्षुषा भविष्यदर्थदर्शिनं भूर्भुवःस्वस्त्रितयवर्तिनीषु प्रजासु हितकाम्यया प्रजापतिः काव्यविद्याप्रवर्त्तनार्थं प्रायुङ्क्त। सोऽष्टादशाधिकरणीं दिव्येभ्यः काव्यविद्यास्नातकेभ्यः सप्रपञ्चं प्रोवाच। तत्र कविरहस्यं सहस्राक्षः समाम्नासीत्। औक्ति

---

इच्छाजन्मभ्यः = कर्मादिपारतन्त्र्यं विनैव स्वेच्छया गृहीतवपुर्भ्यः, स्वान्तेवासिभ्यः = स्वशिष्येभ्यः। तेषु स्वान्तेवासिषु सारस्वतेयः = सरस्वतीसुतः, काव्यपुरुषः = काव्यपुरुषाभिधः, आसीत् = अभूत्, यो, वृन्दीयसामपि = देवानामपि वन्द्यः — विद्यातपोभ्यामभ्यर्हितः, प्रणम्यो वा आसीत्। तं = काव्यपुरुषं, सर्वसमयविदं = त्रिकालज्ञम्, सर्वसंकेतज्ञं सर्वज्ञमित्यर्थः, दिव्येन = अलौकिकेन, चक्षुषा = नेत्रेण, भविष्यदर्थदर्शनं = भाव्यर्थज्ञं, भूर्भुवःस्वस्त्रितयवर्तिनीषु = एतत्त्रितयस्थायिनीषु — प्रजासु = जनतासु हितकाम्यया = हितेच्छया 'काव्यविद्याप्रवर्तनार्थं = काव्यविद्यां प्रवर्तयितु प्रायुङ्क्त = न्ययुङ्क्त।

सः = काव्यपुरुषः, अष्टादशाधिकरणीं = अष्टादश अधिकरणानि यस्यां तादृशीं काव्यविद्यां, दिव्येभ्यः = लोकोत्तरेभ्यः, काव्यविद्यास्नातकेभ्यः = काव्यविद्यार्थिभ्यः, सप्रपञ्चं = सविस्तरं, प्रोवाच = समुपदिदेश। तत्र = अष्टादशाधिकरणेषु, कविरहस्यम् = कविरहस्याख्यमधिकरणं, सहस्राक्षः = सहस्राक्षाख्यः स्नातकः, समाम्नासीद् = समाम्नातवान्। सम्यग्ज्ञातवानित्यर्थः। औक्तिकं = उच्यतेऽनयेति उक्तिः अभिधादिव्यापारः तत्सम्बन्ध्यधिकरणं उक्तिगर्भः

---

आदि शिष्यों में सरस्वती का पुत्र काव्यपुरुष भी एक था। जिसकी वन्दना देवता भी करते थे। दिव्य दृष्टि से भविष्य की वस्तुओं का भी साक्षात्कार करने वाला सर्वज्ञ उस काव्यपुरुष को भूः भुवः स्वः तीनों लोकों की प्रजाओं की हित कामना से स्वयम्भू ने काव्य विद्या के प्रवर्तन में नियुक्त किया। उस काव्य पुरुष ने अठारह अधिकरणों में विभक्त काव्य विद्या को दिव्य काव्य विद्या के स्नातकों में उपदिष्ठ किया।

उन शिष्यों में सहस्राक्ष नामक स्नातक कविरहस्य को समझा। उक्तिगर्भ

कमुक्तिगर्भः रीतिनिर्णयं सुवर्णनाभः। आनुप्रासिकं प्रचेताः। यमो यमकानि। चित्रं चित्राङ्गदः। शब्दश्लेषं शेषः। वास्तवं पुलस्त्यः। औपम्यमौपकायनः। अतिशयं पाराशरः। अर्थश्लेषमुतथ्यः। उभयालङ्कारिकं कुबेरः। वैनोदिकं कामदेवः। रूपकनिरूपणीयं भरतः रसाधिकारिकं नन्दिकेश्वरः। दोषाधिकरणं धिषणः। गुणौपादानिकमुपमन्युः।

---

=एतदाख्यः स्नातकः समाम्नासीत्। रीतिनिर्णयं=एतदाख्यमधिकरणं, सुवर्णनाभः=एतदाख्यःस्नातकः। रीतेर्वर्णाधीनत्वात् यथार्थनामा सुवर्णनाभः। आनुप्रासिकं=अनुप्राससम्बन्ध्यधिकरणं, प्रचेताः=एतदाख्यः स्नातकः। यमः स्नातकः, यमकानि=यमकाधिकरणम्। "यमो यमकम्" इति पाठकल्पने अधिकरणे अच्प्रत्ययेन यमकाधिकरणं यमकं स्यात्। चित्रं=चित्राधिकरणं चित्राङ्गदः। शब्दश्लेषम्=व्यधिकरणबहुव्रीहौ शब्दानां श्लेष यस्मिन्निति विग्रहे वा अर्शादीनामाकृतिगणत्वादधिकरणे अच् प्रत्यये, उययथाऽधिकरणाध्यायः। वास्तवं=भूतार्थवस्तुसम्बन्ध्यधिकरणं, पुलस्त्यः। औपम्यं=उपमासम्बन्ध्यधिकरणम् औपकायनः। अतिशयं=अतिशयसम्बन्ध्यधिकरणं, पाराशरः। अर्थश्लेषम्=अर्थश्लेषाधिकरणम् उतथ्यः। उभयालङ्कारिकं=शब्दार्थोभयालङ्कारसम्बन्ध्यधिकरणं कुबेरः। तद्धितविषयकोत्तरपदवृद्धिः वैनोदिकं=विनोदाधिकरणं, कामदेवः। रूपकनिरूपणीयं=रूपकनिरूपणसम्बन्ध्यधिकरणं, रूपकं निरूपणीयं यस्मिन् तत् इति बहुव्रीहिः। रसाधिकारिकं=रसाधिकाराधिकरणं, नन्दिकेश्वरः=एतदाख्यः स्नातकः। दोषाधिकरणं, धिषणः=एतदाख्यः स्नातकः। गुणौपादानिकं=गुणोपादानसम्बन्ध्यधिकरणम्, उपमन्युः। औपनिषदिकं

---

उक्ति सम्बन्धी विषयों का बोध किया। सुवर्णनाभ नामक काव्यपुरुष का स्नातक रीतिनिर्णय अधिकरण को समझा। प्रचेता ने आनुप्रासिक को, यम ने यमकाधिकरण को, चित्राङ्गद ने चित्राधिकरण को, शेष ने शब्दश्लेष को, पुलस्त्य ने वस्तुसम्बन्धी अधिकरण को, औपकायन ने औपम्य को, पाराशर ने अतिशय-अधिकरण को, उतथ्य ने अर्थश्लेष को, कुबेर ने शब्दार्थोभयालङ्कार सम्बन्धी अधिकरण को, कामदेव ने विनोद सम्बन्धी अधिकरण को, भरत ने दृश्यरूप-रूपकाधिकरणको, नन्दिकेश्वर ने रसाधिकाराधिकरण को, धिषण ने दोषाधिकरण

औपनिषदिकं कुचमारः। इति। ततस्ते पृथक्-पृथक् स्वशास्त्राणि विरचयाञ्चक्रुः। इत्थङ्कारञ्च प्रकीर्णत्वात् सा किञ्चिदुच्चिच्छिदे। इतीयं प्रयोजकाङ्गवती सङ्क्षिप्य सर्वमर्थमल्पग्रन्थेन अष्टादशाधिकरणी प्रणीता। तस्या अयं प्रकरणाधिकरणसमुद्देशः। शास्त्रसङ्ग्रहः, शास्त्रनिर्देशः, काव्यपुरुषोत्पत्तिः, पदवाक्यविवेकः, पाठप्रतिष्ठा, अर्थानुशासनं, वाक्यविषयः, कविविशेषः कविचर्या, राजचर्या, काकुप्रकाराः, शब्दार्थाहरणोपायाः,

=उपनिषदधिकरणं कुचमारः=एतदाख्यः स्नातकः। इति। ततः बोधानन्तरं ते सहस्राक्षादयः स्नातकाः, पृथक्-पृथक् स्वशास्त्राणि=स्वस्वशास्त्राधिकरणानि, विरचयाञ्चक्रुः=विरचितवन्तः।

इत्थङ्कारं=एवंविधं, प्रकीर्णत्वात् = विस्तीर्णत्वात् सा = अष्टदशाधिकरणी, किञ्चित्, उच्चिच्छिदे=उच्छिन्नाऽभूत्। इतीयं=इति विचार्येयमष्टादशाधिकरणी प्रयोजकाङ्गवती=काव्यविद्याप्रयोजकविषयवती, सर्वमर्थं=निखिलं वस्तुजातं, संक्षिप्य=समाहृत्य, अल्पग्रन्थेन=स्वल्पवपुषामुनाग्रन्थेन अष्टादशाधिकरणी=उपर्युक्ताधिकरणवती काव्यमीमांसा, प्रणीता। बुद्धिस्थपदार्थत्वेन प्रणयनस्य भूतकालिकक्तप्रत्ययेन निवेदनम् अथवा प्रणीतस्याप्यनुपलब्धत्वाददर्शनमिति।, तस्याः = अष्टाधिकरण्याः काव्यमीमांसायाः अयं =अनुपदं निवेद्यमानः, प्रकरणाधिकरणसमुद्देशः = प्रकरणाधिकरणानां नाम्ना कीर्तनम्। तत्र कविरहस्ये प्रथमाधिकरणे, शास्त्रसंग्रहः, शास्त्रानिर्देशः, काव्यपुरुषोत्पत्तिः, पदवाक्यविवेकः, पाठप्रतिष्ठा, अर्थानुशासनम्, वाक्यविषयः,

को, उपमन्यु ने गुणोपादानाधिकरण को, कुचमार ने उपनिषदधिकरण को, समझा। इस प्रकार इन अठारहों अधिकरणों को अठारहों स्नातक अलग-अलग समझें। तदनन्तर वे अलग-अलग अपने-अपने शास्त्रों का प्रणयन भी किये।

इस प्रकार भिन्न-भिन्न लोगों से भिन्न विषयों की ग्रन्थ रचनाओं से प्रकीर्ण काव्यविद्या के प्रयोजक सभी अङ्गों वाली इस अष्टादशाधिकरणी (काव्य विद्या) का प्रणयन (निर्माण) किया गया है। जिसमें सभी काव्य सम्बन्धी वस्तुजात एकत्रित किये गये हैं तथा यह बहुत ही थोड़े आयाम में ग्रथित हैं। उस काव्यमीमांसा के प्रकरणात्मक अधिकरणों के नाम इस प्रकार हैं। १—शास्त्रसंग्रह २—शास्त्रनिर्देश ३—काव्यपुरुषोत्पत्ति ४—पदवाक्यविवेक

कविसमयः, देशकालविभागः, भुवनकोशः इति कविरहस्यं प्रथममधिकरण-मित्यादि। इति सूत्राण्यथैतेषां व्याख्या भाष्यं भविष्यति।

समासव्यासविन्यासः सैष शिष्यहिताय नः।
चित्रोदाहरणैर्गुर्वी ग्रन्थेन तु लघीयसी॥
इयं नः काव्यमीमांसा काव्यव्युत्पत्तिकारणम्।
इयं सा काव्यमीमांसा मीमांस्यो यत्र वाग्लवः॥

---

कविचर्या, राजचर्या, काकुप्रकाराः शब्दार्थाहरणोपायः कविसमयः, देशकाल-विभागः भुवनकोशः इति पञ्चदशशीर्षकस्यविषयाणामष्ठादशाध्यायेषु निरूपणं विहितम्। सूत्रत्वेनैषामत्रोपादानं कृतं विस्तरेण व्याख्यानं तत्तत्शीर्षकाध्याये भविष्यति।

सः एष नः=अस्माकं, समासव्यासविन्यासः=समासश्च व्यासश्च समासव्यासौ ताभ्यां विन्यासः=निवेशः विषयाणामिति शेषः, शिष्यहिताय =शिष्याणां हितं शिष्यहितं तस्मै, शिष्योपकाराय कृतः। इयं नः= अस्माकं, काव्यमीमांसा=काव्यविवेचना, काव्यमीमांसा, ग्रन्थेन = प्रमेयसन्दर्भेण लघीयसी=अल्पीयसी स्वल्पवपुरिति भवन्ती चित्रोदाहरणैः=विविधोदाहृतिभिः गुर्वी=विपुलवपुरस्ति। इयञ्च काव्यव्युत्पत्तिकारणम्=काव्यानां व्युत्पत्तेः, कारणं, हेतुः। दृश्यश्रव्योभय काव्यव्युत्पत्तिरसादिसाक्षात्कारौपायिकज्ञानहेतुरिति भावः। इयं काव्यमीमांसा, तथाविधमहिमा यत्र=यस्यां, वाग्लवः=वाचां लवः अपिराक्षेप्यः। साकल्येन वाचां मीमांस्यत्वे तासां लवोऽप्यपरिहार्य इति।

---

५–पाठप्रतिष्ठा ६–अर्थानुशासन ७–वाक्यविधि ८–कविविशेष ९–कविचर्या १०–राजचर्या ११–काकुप्रकार १२–शब्दार्थाहरणोपाय १३–कविसमय १४–देशकालविभाग तथा १५–भुवनकोश। इन पन्द्रह विषयों को ( प्रकरणों को ) अठारह अध्यायों में कविरहस्यनामक प्रथम अधिकरण में व्यक्त किया गया है। इसप्रकार सूत्र रूप में इनका निरूपण कर दिया गया, इनका विस्तृत विवेचन तत्तत् प्रकरणों में किया जायेगा।

इसप्रकार सूत्रात्मक संक्षिप्त रूप में तथा व्याख्याभाष्यात्मक विस्तृत रूप में उन-उन विषयों का निवेश शिष्यों के हित को ध्यान में रखकर किया

**वाग्लवं न स जानाति न विजानाति यस्त्विमाम् ।**
**यायावरीयः सङ्क्षिप्य मुनीनां मतविस्तरम् ।**
**व्याकरोत्काव्यमीमांसां कविभ्यो राजशेखरः ।**

प्रथमोऽध्यायः शास्त्रसङ्ग्रहः ।

इति राजयांशेखरकृतौका व्यमीमांसा कस्यि विरहप्रथमेधिकरणे

---

अथवा वाचां लवत्वेन, अल्पत्वं वैयञ्जनिकचमत्कारापादकपदैकदेशत्वादिकञ्च बोद्धुं शक्यते । अपेराक्षेप्यत्वेऽनभिहितवाच्यत्वस्यदोषस्य सद्भाव इति द्वितीया व्याख्या निर्दिष्टा । यः = काव्यार्थबोधेच्छुः इमां=काव्यलवमीमांसां न विजानाति = नानुसंधत्ते सः, वाग्लवं = काव्यात्मकवाचं कणमपि न जानाति । यायावरीयः = राजशेखरः, मुनीनां = काव्यार्थचिन्तनशीलानां, मतविस्तरं = प्रकीर्णमतं सक्षिप्य = समाहृत्य कविभ्यः = कवीनांकृते, कवयितृभ्योवा, काव्यमीमांसाम् = इमं ग्रन्थं, काव्यविवेचनां वा व्याकरोत्—व्याकृतवान् । एवञ्च प्रथमेऽध्याये अधिकारि-विषयसम्बन्धप्रयोजनानि निर्दिष्टानि । अत्र कवयोऽधिकारिणः, अष्टादशा-धिकरणी काव्यमीमांसा, विषयः, प्रतिपाद्यप्रतिपादकभावः सम्बन्धः, काव्य-व्युत्पत्तिः, प्रयोजनम् इत्यनुबन्धचतुष्टयमपि निबद्धम् ।

काशीहिन्दूविश्वविद्यालयाध्यापकेन, सनातनकविशिष्येण श्रीमदम्बिकप्रसादस्य सूनुना, डॉ० चन्द्रमौलिद्विवेदिना पूरितेयं संस्कृत व्याख्या ।

---

गया है । यह काव्यमीमांसा प्रमेय ग्रन्थ की दृष्टि से अत्यन्त छोटी है किन्तु भिन्न-भिन्न उदाहरणों से यह विस्तृत भी है ।

यह मेरी काव्यमीमांसा काव्य जिज्ञासुओं के लिए काव्य विद्या की सूक्ष्मातिसूक्ष्म प्रौढ़ व्युत्पत्ति का कारण है । यह वहीं काव्यमीमांसा है जिसमें शब्द एवं अर्थों का सूक्ष्म या स्वल्प विवेचन है । वाग् शब्द से ही, शब्द एवं अर्थ दोनों का अर्थ व्युत्पत्तिभेद से ग्रहण होता हैं । जो इसे काव्य के लवमात्र की विवेचना को अच्छी तरह नहीं जानता है वह शब्दार्थों के कण मात्र को भी नहीं समझ सकता है ।

अतः इसप्रकार यायावरीय राजशेखर ने कवियों के लिगे अनेक महर्षियों के मतों को एकत्रित कर थोड़े में काव्यमीमांसा का व्याख्यान किया है ।

## द्वितीयोऽध्यायः शास्त्रनिर्देशः

इह हि वाङ्मयमुभयथा शास्त्रं काव्यं च। शास्त्रपूर्वकत्वात् काव्यानां पूर्वं शास्त्रेष्वभिनिविशेत। नह्यप्रवर्त्तितप्रदीपास्ते तत्त्वार्थसार्थमध्यक्षयन्ति। तच्च द्विधा-अपौरुषेयं पौरुषेयं च। अपौरुषेयं श्रुतिः। सा च मन्त्रब्राह्मणे। विवृतक्रियातन्त्रा मन्त्राः। मन्त्रणां स्तुतिनिन्दाव्याख्यानविनियोगग्रन्थो

---

इह हि = अत्र हि वाङ्मयं = अनादिकालात् प्रवर्तमानं मूलभूतं वाङ्मयं, उभयथा = द्विधा, शास्त्रं काव्यञ्च। शास्त्रपूर्वकत्वात् शास्त्रंपूर्वं यस्यात् तत् शास्त्रपूर्वकम् तस्य भावस्तस्मात् शास्त्रपूर्वकत्वात्, काव्यानां, पूर्वं = प्रथमं शास्त्रेषु = काव्यहेतुभूतेषु, अभिनिविशेत = अभिनिवेष्टव्यम्। पूर्वं शास्त्राभिनिवेशे हेतुरुच्यते, कवयः, अप्रवर्तितप्रदीपाः = न प्रवर्तितः पुरःस्थापितः प्रदीपः यैस्ते अप्रवर्तितप्रदीपाः = अनाश्रितप्रकाशाः इतिभावः, तत्त्वार्थसार्थं = वास्तविकं वस्तुजातम् अज्ञानान्धकारे निक्षिप्तं, नहि, अध्यक्षयन्ति = प्रत्यक्षीकुर्वन्ति। अप्रवर्तितप्रदीपा तमसिस्थितं पदार्थजातमिव, अनाश्रितशास्त्राः काव्यतत्त्वार्थसार्थं प्रत्यक्षीकर्तुं न पारयन्ति, इति भावः।

तच्च = शास्त्रञ्चापि, द्विधा = द्विविधम्। अपौरुषेयं, पौरुषेयञ्च। अपौरुषेयं = कर्तृकत्वाभावादपौरुषेयं, श्रुतिः = त्रयी। सा च = श्रुतिश्च सा, मन्त्रब्राह्मणे = मन्त्रश्च ब्राह्मणञ्च मन्त्रब्राह्मणे, मन्त्रब्राह्मणाभिन्नेति। तत्र = मन्त्रब्राह्मणयोः, विवृतक्रियातन्त्राः = विवृतं, सम्यङ् निरूपितं, क्रियातन्त्रं = क्रियाकलापो, यैस्ते विवृतक्रियातन्त्राः, मन्त्राः = मन्त्राख्यो भागः इति। मन्त्राणां तत्तत्प्रकरणसङ्गत्या-

---

यहाँ वाङ्मय शास्त्र एवं काव्य भेद से दो प्रकार का होता है। शास्त्रों में काव्य की कारणता होने से पहले काव्य के कारणभूत शास्त्र का विवेचन आवश्यक है। जैसे कोई भी बिना दीप के अन्धकार में स्थित घट पटादि पदार्थों को नहीं देख पाता वैसे ही बिना शास्त्रज्ञान के काव्यार्थ तत्वों का कोई भी साक्षात्कार नहीं कर पाता है। वह शास्त्र पौरुषेय एवं अपौरुषेय भेद से दो प्रकार का होता है। अपौरुषेय, श्रुति को कहते है। वह श्रुति मन्त्र एवं ब्राह्मण रूप होती है। कर्मकाण्ड कलापों को प्रकाशित करने वाले को मन्त्र

ब्राह्मणम् । ऋग्यजुःसामवेदास्त्रयी आथर्वणश्च तुरीयः । तत्रार्थव्यवस्थित-पादा ऋचः । ताः सगीतयः सामानि । अच्छन्दांस्यगीतानि यजूंषि । ऋचो यजूंषि सामानि चाथर्वणं त इमे चत्वारो वेदाः । इतिहासवेद-धनुर्वेदौ गान्धर्वायुर्वेदावपि चोपवेदाः । "वेदोपवेदात्मा सार्ववर्णिकः

---

पूर्वापरपर्यालोचनमुखेन, स्तुतिनिन्दाव्याख्यानविनियोगग्रन्थः = स्तुतिनिन्दाव्या-ख्यानविनियोगादिप्रतिपादको मन्त्रभागस्य भाष्यात्मको ग्रन्थो, ब्राह्मणमिति । मन्त्रब्राह्मणाभिन्ना श्रुतिः ऋग्यजुसामवेदास् त्रयी चाप्युच्यते । एकश्च तुरी-योऽपि वेदे आथर्वणो भवति । एवञ्च "त इमे चत्वारो वेदाः" इत्यग्रे ग्रन्थ-कारेण निर्दिश्यते ।

तत्र ऋग्वेदं लक्षयन्नाह–तत्र = तेषु, अर्थव्यवस्थितपादाः = अर्थेन, पदार्थेन व्यवस्थितः कल्पितार्थादिशून्यः, पादः यासु ताः, ऋचः=ऋग्वेदः । ता एव = ऋच एव, सगीतयः = गीतिसहिताः सामानि = सामवेदः । तान्येव = सामान्येव, अच्छन्दांसि=छन्दोरहितानि, अगीतानि, यजूंषि=यजुर्वेदः । इत्थं ऋचो यजूंषि सामानि आथर्वणं चेति, ते = ऋग्यजुसामाथर्वाख्याश्चत्वारो वेदाः ।

इतिहासवेदः, धनुर्वेदश्चेति इतिहासधनुर्वेदौ, गान्धर्ववेद आयुर्वेदश्चेति गान्धर्वायुर्वेदौ इति चत्वार उपवेदा । आचार्यो द्रौहिणिरेको गेयवेदोऽपि स्वीकरोति यो वेदोपवेदमिश्रितस्वरूपः सर्ववर्णगोचरः पञ्चमो भवति । शूद्रादीनां "त्रयी न श्रुतिगोचरा" अधीयीरंस्त्रयो वर्णाः" इत्यादिवचनैस्त्रैवर्णिकेतराश्रवणानुच्चार्य-त्वाभ्यां त्रय्या न सार्ववर्णिकत्वम् । गेयवेदस्य वेदोपवेदयोर्मिश्रत्वं तु—"सामवेदस्य

---

भाग कहते हैं । मन्त्रों के स्तुति निन्दा व्याख्यान एवं विनियोग आदि के प्रतिपादक ग्रन्थ को ब्राह्मण भाग कहते हैं । ऋग्, यजुः साम वेदों को त्रयी कहा जाता है । चौथावेद आथर्वण भी होता है । उनमें से जिसके पाद अर्थप्रतिपादन में व्यवस्थित उपलक्षकत्वादिशून्य हो उसे ऋग्वेद कहते हैं । अथवा व्यवस्थितपाद से छन्दोबद्धपाद भी ग्रहण किया जा सकता । इन्हीं के सस्वर गेय रूप होने पर सामवेद कहा जाता है । छन्द तथा गान से रहित साम को ही यजुर्वेद कहे जाते है । इस प्रकार ऋचायें, यजु, साम तथा अथर्व ये चार वेद वे ही

पञ्चमो गेयवेदः" इति द्रौहिणिः ।

"शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दोविचितिः, ज्योतिषञ्च षडङ्गानि" इत्याचार्याः । "उपकारकत्वादलङ्कारः सप्तममङ्गम्" इति यायावरीयः । ऋते च तत्स्वरूपपरिज्ञानाद्वेदार्थानवगतिः । यथा—

---

गीतात्मकत्वाद् वेदात्मकत्वं गेयवेदस्य सिद्धमेव । लौकिकावैदिकादिगीत प्राचुर्य्याद् इतिहासधनुर्वेदादिसम्बद्धगीतबाहुल्याच्चापवेदात्मत्वमपि इति चन्द्रिकाटीकाकारष् टीकितवान् ।

वेदस्य षडङ्गानि निदर्शयन्नाह—शिक्षा, कल्पो, व्याकरणं निरुक्तं छन्दोविचितिर् ज्यौतिषं षडङ्गानि । इत्याचार्याः = इत्याचार्याणां सम्मतम् । यायावरीयं मतमुपस्थापयति—यायावरीत्वेनैतत्पूर्वमनुल्लेख्यत्वमस्य द्योतयति यायावरीयः राजशेखरस्योपाधिश्च । उपकारकत्वात् = सकलशास्त्राणामवबोधायोपकारित्वात्, सप्तमं = षडतिरिक्तं अङ्गम् = अवयवः, अलङ्कारः = अलंकृतिश्च । तत्स्वरूपपरिज्ञानात् = अलंकारस्वरूपपरिज्ञानं ऋते = विना, वेदार्थानवगतिः वेदार्थानामनबोधः । एवञ्च वेदार्थतात्पर्यावबोधोपयोगित्वसमानधर्मत्वात् यथा षडङ्गानामङ्गत्वम् तथैवालङ्कारस्यापि सुतरां सिद्धम् । नास्त्यलङ्काराणां वेदार्थोपयोगित्वम्; । चेत् स्यात्तदानीमवश्यमेवाभियुक्तैर्निर्देश्यं स्यादितिशंकामुदाहरणैर्निवारयन्नाह—यथेति ।

---

है। इतिहास धनुर्वेद गान्धर्व तथा आयुर्वेद चार उपवेद है। तीन ही वर्णो, ब्राह्मण क्षत्रिय एवं वैश्यो को वेदों का उच्चारणादि अधिकार होने से चारों वर्णों के लिए श्रव्य एव उच्चार्य पाँचवा वेद गेय वेद भी माना है जो वेद तथा उपवेद का मिश्रित स्वरूप है। ऐसा द्रौहिणि ( आचार्य ) ब्रह्मा के मानस पुत्र ) मानते हैं।

आचार्यों के मतानुसार, इन वेदों के शिक्षा, कल्प, व्याकरण, निरुक्त, छन्दोविचिति तथा ज्योतिष छः अङ्ग होते हैं। इन्हीं अङ्गों की तरह अलङ्कार भी वेद का सातवाँ अंग है क्योंकि वेदार्थानुसंधान में यह भी उन्हीं की तरह उपकारक होता है ऐसा यायावरीय ( राजशेखर ) का मत है। जब तक

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषष्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति॥**

---

द्वा = द्वौ, सुपर्णा = सुपक्षौ पक्षिणौ, सयुजा = सहचारिणौ, सखाया = सखायौ, समानं = एकं तुल्यं, वृक्षं = आश्रयं, परिषष्वजाते = समालिङ्गतः। तयोः = सुपर्णयोः पक्षिणोः, अन्यः = एकः, पिप्पलं = तदाश्रयप्रसूतं फलं, स्वादु = स्वादुङ्कारं यथा स्यात्तथा अत्ति = अश्नाति। अन्यः - तद्भिन्नोऽपरः अनश्नन् = अनदन् अभिचाकशीति = अभितः प्रकाशत इति। अत्र द्वाभ्यां सुपर्णाभ्यां जीवात्मनोरुपमेयस्य निगीर्णत्वम्। जीवात्मानौ समानमाश्रयमवलम्ब्य स्थितावपि, तयोर्जीवस्तत्तत्सुखानुभवपूर्वकं तान् तान् शब्दादीन् विषयान् स्वदते, आत्मा तु तादृशसुखास्वादपराङ्मुखः साक्षिरूपेण तिष्ठन् चकास्तीति। अत्र शास्त्रोक्तौ सर्वथैवाभेदारोपं विना अभिप्रेतार्थानवगतिरिति निगीर्याध्यवसानातिशयोक्त्य लङ्कारमुखेन भावाभिव्यक्तिः प्रदर्शिता। अनधीतालङ्कारदर्शनास्तत्र तत्र सुपर्णवृक्षपिप्पलाद्युपमानपदैःसह जीवात्मशरीरकर्मफलानामभेदारोपमकृत्वा चमत्कारमनुभवितुं न पारयन्तीति सप्तमाङ्गत्वेनास्यापि स्वीकारः समुचितः। अत्राचार्यै रूपकं निर्दिशितम्। किन्तु तन्न विचारसहम्। वस्तुतः उपमेयतावच्छेदकपुरस्कारेणोपात्ते उपमेये उपमानतादात्म्यारोपो रूपकम्। तदत्रोपमेयं नोपात्तमत उपमानेन निगीर्णोपमेयत्वादतिशयोक्तिः। अस्तु रूपकम् अतिशयोक्तिर्वा। अभेदारोपोऽत्र मूलम्। रूपके भेदाभेदारोपोऽतिशयोक्तौ तु सर्वथैवा-

---

अलंकार के स्वरूप (लक्षण) का ज्ञान न हो, तब तक वेदार्थ का बोध नहीं होता है। जैसे श्वेताश्वतरोपनिषद् का यह मन्त्र विना अलंकार बोध के स्पष्ट (अभिव्यक्त) नहीं हो पाता।

दो सुन्दरपक्षी जो साथ ही साथ रहते हैं परस्पर मित्र है समान वृक्ष पर निवास करते हैं। उन दोनों में एक तो पिप्पल फल का सस्वाद, स्वादानुभूति पूर्वक, भक्षण करता है किन्तु दूसरा विना कुछ खाये परम प्रकाशमान रहता है।

वस्तुतः इसका अर्थ, दो पक्षी से जीवात्मा एवं परमात्मा, समान वृक्ष से शरीर, पिप्पलपद से कर्मयोग, परिलक्षित होता है इस प्रकार इसका अर्थ होता है कि, परस्पर सम्बद्ध एक दूसरे के मित्र जीवात्मा एवं परमात्मा

सेयं शास्त्रोक्तिः। प्रत्यधिकरणं च ऋचं यजुः सामाथर्वणं ब्राह्मणं चोदाहृत्य भाषामुदाहरिष्यामः। तत्र वर्णानां स्थानकरणप्रयत्नादिभि-

---

भेदारोपो भवतीति सूक्ष्मो भेदः। सेयं शास्त्रोक्तिः। शास्त्रोक्तिरियमलङ्कारबोधं बिना दुरूहैव।

प्रत्यधिकरणं=सर्वेषु औक्तिकाद्यधिकरणेषु ऋचं=मन्त्रभागम्, ऋग्वेदस्य, यजुः=यजुर्वेदं, साम=सामवेदं, आथर्वणं=अथर्वाख्यं, ब्राह्मणं=ऋग्वेदस्यैव स्तुत्यादिपर्यवसायिब्राह्मणभागम् उदाहृत्य=उदाहरणैः प्रस्तूय भाषामुदाहरिष्यामः पौरुषेयं निरूपयिष्यामः।

शिक्षा=तत्तद्वेदाङ्गेषु अङ्गभूता या शिक्षा सा वर्णानां स्थानकरणप्रयत्नादिभिः=तत्तद्वर्णानामकारादीनां ताल्वादिस्थानकरणप्रयत्नादिभिद्, निष्पत्ति-

---

एक ही शरीर में निवास करते हैं किन्तु उन दोनों में जीवात्मा कर्मभोग को वासना से वासित होकर भोगता है किन्तु दूसरा परमात्मा, बिना ही किसी कर्मवासना के ( बिना ही कर्म भोगों के ) निरन्तर प्रकाशमान होता रहता है।

यहाँ पर दो पक्षियों का जीवात्मा एवं परमात्मा से बिना अभेदारोप के अर्थ स्पष्ट नहीं हो पाता। हाँ इस अभेद के सन्दर्भ में कुछ व्याख्याकार भेदाभेदरूपारोपरूप रूपक मानते हैं किन्तु यहाँ मेरामत भिन्न है यदि उपमेय पदार्थ भी शब्दतः उपात्त होता तथा उपमेयतावच्छेदकपुरस्कारेण उपस्थित उपमेय का उपमान से अभेदारोप किया जाता तो रूपक बनता। किन्तु यहाँ वैसा नहीं है। अतः यहाँ निगीर्याध्यवसानातिशयोक्ति अलंकार ही समुचित है। जहाँ पर उपमान से निगीर्ण उपमेय हो वहाँ रूपक का विषय नहीं माना जा सकता। यहाँ ऐसी ही बात है अतः "निगीर्याध्यवसानं तु प्रकृतस्य समेन यद्" लक्षण के अनुसार यहाँ अतिशयोक्ति अलंकार माना जाना चाहिये। प्रायः यहाँ रूपक पं० केदारनाथ सारस्वत पं० श्रीनारायण शास्त्री खिस्ते एवं अन्य भी आचार्य हैं। जिन्होने अपनी-अपनी टीकाओं में रूपक का उल्लेख किया है।

औक्तिकादि प्रत्येक अधिकरण में ऋग् यजु साम अथर्व तथा ब्राह्मणों का उदाहरण देकर भाषा का उदाहरण प्रस्तुत करेंगे।

**निष्पत्तिनिर्णयिनी शिक्षा आपिशलीयादिका। नानाशाखाधीतानां मन्त्राणां विनियोजकं सूत्रं कल्पः। स च यजुर्विद्या। शब्दानामन्वाख्यानं**

---

निर्णयिनी = उत्पत्तिनिर्णायिका भवति। अर्थात्—

शिक्षाङ्गस्योदात्तानुदात्तस्वरितह्रस्वदीर्घप्लुतादिविशिष्टस्वरव्यञ्जनात्मकवर्णोच्चारणविशेषज्ञानं प्रयोजनमस्ति। आपिशलीयादिका = आपिशलिपाणिनि याज्ञवल्क्यादिप्रोक्ता शिक्षाऽस्ति इति।

कल्पः—नानाशाखाधीतानां = विविधशाखापठितानां मन्त्राणां = अर्थव्यवस्थितपादानां, विनियोजकं = तत्र तत्र विनियोगकरं सूत्रं, कल्पो भवति। सा च यजुर्विद्या = स कल्प एव यजुर्विद्योच्यते। तथैव सहविशेषेण सम्बन्धात्। यथा—कात्यायनाश्वलायनबौधायनगोभिलादिभिर्महर्षिभिः प्रणीतः सूत्रग्रन्थः।

व्याकरणम्—शब्दानां = सिद्धानां पदानां, अन्वाख्यानं = पश्चान्निरूपणम् पश्चाद्व्युत्पत्तिर्वा व्याकरणं भवति। व्याक्रियन्ते शब्दा अनेनेति व्याकरणमन्यत्रापि निष्पादितम्। उक्तञ्च

---

इस प्रकार वेदों के लक्षणोपरान्त अब उनके अर्थावबोध में सहायक अङ्गों का निरुपण किया जा रहा है। इन वेदाङ्गों में शिक्षा रूप अङ्ग वह है जिसके द्वारा वर्णों के स्थान करण प्रयत्न एवं उच्चारण आदि का सम्यग् वर्णन किया जाता है। जिसे अपिशलि याज्ञवल्क्य पाणिनि आदि ऋषियों द्वारा प्रणीत ग्रन्थ शिक्षा कहे जाते हैं।

कल्प = विविध शाखाओं में पढ़े गये मन्त्रों का यथोचित कर्मों में विनियोग करने वाले शास्त्र को कल्प कहते हैं। यह कल्प यजुर्विद्या ही है क्योंकि इसका मुख्य सम्बन्ध यजुर्विद्या से होता है। कात्यायन आश्वलायन बौधायन गोभिल आदि ऋषियों से प्रणीत ग्रन्थ कल्प कहे जाते हैं।

व्याकरण—सुबन्त एवं तिङन्त पदों के प्रकृति प्रत्यय की विवेचना करने वाला शास्त्र व्याकरण कहा जाता है। कहा भी गया है कि प्रकृत, प्रत्यय, उपाधि निपातादि से विभागपूर्वक पदों के अन्वाख्यान करनेवाले शास्त्र को व्याकरण कहते हैं। जैसे आपिशलि-चन्द्र-शाकटायन-पाणिनि आदि के सूत्रबद्ध व्याकरण ग्रन्थ।

व्याकरणम् । निर्वचनं निरुक्तम् । छन्दसां प्रतिपादयित्री छन्दोविचितिः । ग्रहगणितं ज्यौतिषम् । अलङ्काराख्यानं तु पुरस्तात् । पौरुषेयं तु पुराणम्, आन्वीक्षिकी, मीमांसा, स्मृतितन्त्रमिति चत्वारि शास्त्राणि । तत्र वेदाख्यानोपनिबन्धनप्रायं पुराणमष्टादशधा । यदाहुः—

---

प्रकृतप्रत्ययोपाधिनिपातादिविभागशः ।
पदान्वाख्यानकरणं शास्त्रं व्याकरणं विदुः ॥ इति ॥

निरुक्तम् = शब्दार्थानां वर्णागमादिभिः पञ्चभिः प्रकारैः निर्णायि शास्त्रं निरुक्तम् ।

छन्दोविचितिः = छन्दसां = त्रिष्टुबनुष्टुब्गायत्र्यादीनां छन्दसां प्रतिपादयित्री = स्वरूपनिर्मात्री छन्दोविचितिः, यथा पिङ्गलसूत्रादिग्रन्थः ।

ज्यौतिषम्—ग्रहगणितं = ग्रहसमयादिप्रतिपादकं शास्त्रं ज्यौतिषम् ।

अलङ्काराख्यानं तु पुरस्तात् । सप्तमाङ्गत्वेन स्वीकृतस्यालङ्कारस्य व्याख्यानं अग्रे करिष्यते ।

इत्थमपौरुषेयस्य वेदस्या तदङ्गस्य च वाङ्मयस्य विचारं कृत्वा पौरुषेयस्य वाङ्मयस्य विवेकं प्रस्तोतुं क्रमते—पौरुषेयंतु इति ।

पौरुषेयं तु = पुरुषकर्तृकं, पुराणम् = सर्गादिलक्षणयुतमष्टादशप्रकारकं आन्वीक्षिकी = अर्हद्भदन्तलोकायतसांख्यन्यायवैशिषकरूपा, मीमांसा = न्याय-सहस्रैर्निगमवाक्यविवेक्त्री, स्मृतितन्त्रम् = श्रुत्यर्थस्मरणकर्त्र्यो अष्टादशसंख्याकाः स्मृतयः । इति चत्वारि शास्त्राणि, पौरुषेयाणीति तत्र—

पुराणम्—तत्र = पौरुषेयशास्त्रेषु, पुराणम् = पुराणशास्त्रं वेदाख्यानोपनिवन्धनप्रायं = वेदेषु यदाख्यानम् तस्यैवोपनिबन्धनात्मकप्रायम्, बीजरूपेण वेदेषु स्थितानामाख्यानानां पुराणेषु विस्तरेणोपनिबन्धनं क्रियते इतिभावः । अष्टादशधा = अष्टादशप्रकारकम् । उक्तञ्च कुत्रचिद् भेदविषये

"मद्वयं भद्वयञ्चैव व्रत्रयं व्रचतुष्टयम् ।

---

निरुक्तम्—वर्णागम आदि पांच प्रकारों से शब्द के अर्थों का निर्णय करने वाला शास्त्र निरुक्त कहा जाता है ।

छन्दोविचितिः—अनुष्टुप् त्रिष्टुप् जगती आदि २४ जातियों के स्वरूप

**सर्गः प्रतिसंहारः कल्पो मन्वन्तराणि वंशविधिः।**
**जगतो यत्र निबद्धं तद्विज्ञेयं पुराणमिति ॥**

---

अ.ना.प.लि.ङ्ग.कू स्कानि पुराणानि प्रचक्षते'' ॥ इति ॥

पुराणस्य लक्षणं तु—

सर्गः = जगतः सृष्टिः, प्रतिसंहारः = प्रलयः, कल्पः = त्रिंशत्प्रकारकः श्वेतवाराहादिकल्पः, मन्वन्तराणि = चतुर्दशस्वायम्भुवादिमन्वन्तराणि, वंशविधिः = वंशानुक्रमश्च यत्र = यस्मिन् निबद्धं = साधुर्वणितम् तत् पुराणमिति = पुराणाख्यं पौरुषेयं शास्त्रमिति विज्ञेयं = ज्ञातव्यम् ॥

इतिहासं निरूपयन्नाह —

पुराणस्यैव प्रविभेदः = एकतरो भेदः इतिहास इति एके = प्रधानाचार्याः ।

---

प्रतिपादक शास्त्र छन्दोविचिति कहे जाते हैं पिङ्गलछन्दः सूत्रादि ग्रन्थ छन्दोविचिति हैं ।

**ज्योतिष**—ग्रहों की गतिविधि तथा समय आदि के निर्वचन करने वाले ग्रन्थ ज्यौतिष शास्त्र कहे जाते हैं । प्राचीन आचार्यों से उक्त उपर्युक्त ये छवों, वेद के अङ्ग हैं । यायावरीय के मतानुसार सातवाँ अङ्ग अलङ्कार भी है उसका व्याख्यान ( निरूपण ) आगे किया जायेगा ।

इस प्रकार अपौरुषेय शास्त्रोका निरूपणकर अब पौरुषेय शास्त्रो का उपक्रम करते हुए कहते हैं कि पौरूषेय शास्त्र, पुराण, आन्विक्षिकी, मीमांसा तथा स्मृति-तन्त्र आदि चार होते हैं । उनमें वेद में आये हुए आख्यानकों का विस्तृत वर्णन जिसमें पाया जाता है उसे पुराण कहते हैं यह पुराण अठारह प्रकार का होता है न तो इससे अधिक न तो इससे कम । इसके लक्षण के विषय में कहा गया है कि—

१—संसार की सृष्टि, २—प्रलय, अथवा अवान्तरसृष्टि, श्वेतवाराहादि ३—कल्पों के भेद, ४—स्वायम्भुव आदि १४ मन्वन्तर, ५—राजर्षि आदि का वंशानुक्रम, ये पाँचों जिसमें उपवर्णित हो उसे पुराण ऐसा पौरुषेयशास्त्र समझना चाहिये । इतिहास भी पुराण का ही एक भेद है क्योंकि इसमें पुराणान्तर्गत पाँचों वस्तुओं में वंशानुक्रम वस्तु का विस्तार से वर्णन पाया जाता है ।

"पुराणप्रविभेद एवेतिहासः" इत्येके। स च द्विधा परिक्रियापुराणकल्पाभ्याम्। यदाहुः—

परिक्रिया पुराकल्प इतिहासगतिर्द्विधा।
स्यादेकनायका पूर्वा द्वितीया बहुनायका॥

तत्र रामायणं भारतं चोदाहरणे। आन्वीक्षिकीं तु विद्यावसरे वक्ष्यामः। निगमवाक्यानां न्यायैः सहस्रेण विवेक्त्री मीमांसा। सा च

---

अर्थात् प्रधानाचार्याणां मतानुसारेण इतिहासो न वस्त्वन्तरम् अपि तु पुराणान्तर्गतवंशानुक्रमप्रधान एवेति पृथग्न गण्यते। स = इतिहासः द्विधा = द्विप्रकारकः, परिक्रियापुराकल्पाभ्यां = परिक्रियाख्यपुराकल्पाख्यभेदाभ्याम्। यदाहुः = यदुक्तवन्तः = परिक्रियेति। यत्रैकनायकसम्बद्धा कथा वर्णिता, स परिक्रियात्मक इतिहासः। यत्र बहुनायकसम्बद्धा स पुराकल्प इति, परिक्रियापुराकल्पाभ्यां इतिहासो द्विविधः। स एव, परिक्रया = परिक्रियाख्य., पुराकल्पः=पुराकल्पाख्यः, इतिहासगतिः=इतिहासोपक्रमः द्विधा = द्विविधः। पूर्वा=प्रथमा परिक्रिया, एकनायका = एकोनायको यस्यां सा, तादृशी, द्वितीया=अपरा, बहुनायका = बहवोनायका यस्यां सेति मन्तव्येत्यर्थः। लक्षणानन्तरमुदाहरणं प्रस्तुवन्नाह—

तत्र तयोः क्रमशः, परिक्रियाख्येतिहासस्य रामायणम्, रामैकमात्रप्रधान नायकत्वात्, पुराकल्पाख्येतिहासस्य भारतञ्चेत्युदाहरणं द्वयोर्भवतः। आन्विक्षिकीं =षट्तर्का-त्मिकां, निरूपयिष्यमाणां, विद्यावसरे, = विद्यानिरूपणप्रसङ्गे, वक्ष्यामः = निरूपयिष्यामः। नात्रविद्यास्थाननिरूपणावसरे इति भावः।

---

इतिहास परिक्रिया एवं पुराकल्प भेद से दो प्रकार का होता है। जैसा कि कहते हैं इतिहास की स्थिति, दो प्रकार की होती है १—परिक्रिया २—पुराकल्प। उसमें परिक्रिया इतिहास एक नायिका वाली होती है तथा तथा पुराकल्प में बहुत से नायक होते हैं। परक्रिया का उदाहरण रामायण। तथा पुराकल्प का उदाहरण महाभारत है। आन्वीक्षिकी का विचार आगे विद्या निरूपण के अवसर पर करेंगे क्योंकि विद्या स्थान के साथ-साथ यह विद्या भी है।

द्विविधा–विधिविवेचनी ब्रह्मनिदर्शनी च । अष्टादशैव श्रुत्यर्थस्मरणात्स्मृतयः । "तानीमानि चतुर्दश विद्यास्थानानि, यदुत वेदाश्चत्वारः, षडङ्गानि, चत्वारि शास्त्राणि" इत्याचार्याः । तान्येतानि कृत्स्नामपि भूर्भुवःस्वस्त्रयीं व्यासज्य वर्त्तन्ते । तदाहुः—

---

मीमांसां लक्षयन्नाह–निगमवाक्यानां = वेदवाक्यानां, सहस्त्रेण = असंख्यातैः न्यायैः = शास्त्रीयविधिभिर्नियमैर्वा, विवेक्त्री विवेचिका, मीमंसेति । भेदं प्रदर्शयति—सा मीमांसा द्विविधा = द्विधा । विधिविवेचनी = विधेः = कर्मकाण्डादिविधेः, "ज्योतिष्टोमेन यजेत" इत्यादि लिङ्गोपस्थापितस्य विधिवाक्यस्य, विवेचनं = विचारो यस्यां सा विधिविवेचनीति । द्वितीया ब्रह्मनिदर्शनी = ब्रह्मणो वेदान्तमहावाक्यप्रतिपाद्यस्य तत्वस्य निदर्शनं दृष्टान्तविधया कथञ्चित्प्रतिपादनं यस्यां सेति । उभयत्र व्यधिकरणबहुव्रीहिः । पूर्वमीमांसोत्तरमीमांसे इति । स्मृतयः = स्मृतितन्त्रं, अष्टादशैव = अन्यूनानतिरिक्तत्वेनाष्टदशधा । श्रुत्यर्थस्मरणात् = वेदार्थस्मरणात्, स्मृतीनां स्मृतित्वम् । तानीमानि = तानि-अपौरुषेयाणि, इमानि पौरुषेयाणि च, सर्वाणि चतुर्दश विद्यास्थानानि । तानीमानि निर्दिशन्नाह–यदुत = यच्च, वेदाश्चत्वारः = ऋग्यजुःसामाथर्वणाश्चत्वारः, षडङ्गानि = शिक्षाकल्प-व्याकरण-निरुक्त-छन्दोविचिति-ज्यौतिषेति षडङ्गानि चत्वारि शास्त्राणि=पुराणान्विक्षिकीमीमांसास्मृतितन्त्रेति चत्वारि पौरुषेयाणि शास्त्राणि, संकलनया चतुर्दश विद्यास्थानानीति, आचार्याः । तान्येतानि = अनुपदोक्तचतुर्दशस्थानानि; कृत्स्नामपि = निखिलामपि भूर्भुवःस्वस्त्रयीं = भूर्भुवस्वस्त्रितयं भुवनं व्यासज्य = अभिव्याप्य वर्तन्ते = समवतिष्ठन्ते । विद्यास्थानानां निखिलानामधिगन्तव्यत्वाशक्यत्वं दर्शयन् अभियुक्तोक्तिमुल्लिखति तदाहुः विद्यास्थानानामिति—

---

वेद वाक्यों को सहस्त्रों न्यायों से बिचार करने वाला शास्त्र मीमांसा शास्त्र कहा जाता है । यह मीमांसा दो प्रकार की होती है १—कर्मकाण्ड विधि का विवेक करने वाली तथा ब्रह्म का दृष्टान्त विधि से निदर्शन करा देने वाली । स्मृतियाँ वेदार्थों का स्मरण करती हैं ये अठारह प्रकार की होती हैं । इस

विद्यास्थानानां गन्तुमन्तं न शक्तो
जीवेद्वर्षाणां योऽपि साग्रं सहस्रम् ।
तस्मात्सङ्क्षेपादर्थसन्दोह उक्तो
व्यासः संत्यक्तो ग्रन्थभीरुप्रियार्थम् ।

"सकलविद्यास्थानैकायतनं पञ्चदशं काव्यं विद्यास्थानम्" इति याया-

---

यो = जनः विद्या अधिजिगमिषुः, वर्षाणां साग्रं सहस्रं = सहस्राधिकवर्षं यावत् जीवेद् = चेत् प्राणान् धारयेत्, तथापि, विद्यास्थानानां = अनुपदनिर्दिष्ट-चतुर्दशविद्यास्थानानां, अन्तं = पारं, गन्तुं = यातुं न शक्तः = न समर्थः । सकलास्ताः सम्यगधिगन्तुमसमर्थो लोक इत्यर्थः । तस्मात् = तस्माद्हेतोः; संक्षेपात् = संक्षेपेण, अर्थसन्दोहः = अर्थसमूह उक्तः = अभिहितः । व्यासस्तु = सकलविद्यार्थ-सन्दोहस्य विस्तारः, गन्थभीरुप्रियार्थम् = ग्रन्थेभ्यो बिभेतीति ग्रन्थभीरुः ग्रन्थपठनादौ ये भीरवस्तेषां प्रियार्थम् = मोदार्थम् हितार्थं वा, संत्यक्तः = परित्यक्तः इति ।

चतुर्दशविद्यातिरिक्तं पञ्चदशं यायावरीयाभि-स्याभिमतं विद्यास्थानं काव्यमपि निदर्शयन्नाह—

सकलविद्यास्थानैकायतन , = सकलविद्यास्थानानाम् एकमद्वितीयम् आयतनं = स्थानं, साङ्गेषु वेदेषु चतुर्षु शास्त्रेषु च व्युत्पत्याधयकत्वात् परमावश्यकत्वात्, पञ्चदशं, विद्यास्थानं, काव्यमिति यायावरीयः = यायावरवंश्यः, स्वयं राजशेखरो वा । काव्यस्यविद्यास्थानत्वे हेतुं दर्शयति—गद्यपद्यमयत्वात् = गद्यपद्योभयात्मकत्वात्, उभयात्मकचतुर्दशविद्योपकारकत्वं सुतरांसिद्ध्यति । कविधर्मत्वाच्च = विभ्रा-

---

प्रकार पूर्वोक्त अपौरुषेय एवं अनुपदोक्त पौरुषेय विद्यास्थान चौदह प्रकार के होते हैं । चारों वेद, छवों अंग एवं पुराणादि चारों पौरुषेय शास्त्र । इन चौदह विद्या स्थानों को अनेक आचार्य मानते है । ये विद्यास्थान भूः, भुवः, स्वः तीनों लोको में व्याप्त हैं उसके विषय में कहते हैं कि—

मनुष्य सहस्रों वर्षों से अधिक जीवित रहकर भी इन चौदह विद्याओं का अन्त नहीं पा सकता । अतः संक्षेप में इनके अर्थ समूह को कह दिया गया है तथा उन अर्थों के विस्तार को ग्रन्थ भीरु लोगों की प्रसन्नता के लिए छोड़ दिया गया ।

यायावर राजशेखर के मत में पन्द्रहवाँ विद्या स्थान काव्य भी है क्योंकि यह

वरीयः। गद्यपद्यमयत्वात् कविधर्मत्वात् हितोपदेशकत्वाच्च। तद्धि शास्त्राण्यनुधावति। 'वार्ता कामसूत्रं शिल्पशास्त्रं दण्डनीतिरिति पूर्वैः सहाष्टादश विद्यास्थानानि" इत्यपरे। आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्चेति विद्याः। "दण्डनीतिरेवैका विद्या" इत्यौशनसाः। दण्डभयाद्धि

---

इ्दर्शिनां कवीनां धर्मत्वात् प्रौढोक्त्यादिसिद्धत्वात्, तथा च हितोपदेशकत्वात् च = रामादिवत्प्रवर्तितव्यं न रावणादिवदिति कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशस्य कान्तासम्मिततया सम्पादनेनाव्यभिचरितफलत्वात्। एवञ्चैभिस्त्रितयहेतुभिः, स्वरूपधर्मप्रयोजनप्रतिपादकैः, समस्वरूपधर्मप्रयोजनानां विद्यास्थानानामेकतमं विद्यास्थानमतिरिक्तं काव्यमपि सम्यगिति निरूपितम्। तत् हि = पञ्चदशं विद्यास्थानं काव्यं हि, शास्त्राणि = पौरुषेयापौरुषेयाणि, अनुधावति = पश्चाद् धावति। काव्यकारणतयाऽऽलोचितपदार्थस्य समाधेर्गुणस्य स्वीकारात्, शास्त्रपूर्वकत्वात् काव्यानां, पूर्वं शास्त्रेष्वभिनिविशेत" इति स्वयमेव पूर्वकथनाच्च, शास्त्रमनु काव्यधावनं समीचीनमेव।

अन्यमतानुसारेण विद्यास्थानानामष्टादशविधत्वं दर्शयन्नाह— अपरे=अन्ये वार्ता, कामसूत्रं शिल्पशास्त्रं, दण्डनीतिरिति चत्वारि विद्यास्थानानि पूर्वोक्तैश्चतुर्दशविद्यास्थानैः संयोज्याष्टादशविद्यास्थानान्याहु। विद्यानिरूपणम् =

विद्यास्थानं निरूप्य विद्या निरूप्यन्ते। तत्र विद्यानां समुद्देश —

आन्विक्षिकी त्रयी वार्ता दण्डनीतिश्चेति चतस्रो विद्या इति समेषामाचार्याणां मतम्। तत्र औशनसानां मते दण्डनीतिरेवैका विद्या। एकत्वावधारणेहेतुमाह—

---

सभी विद्यास्थानों का एकाश्रय है। यह भी अन्य विद्यास्थानों की भाँति गद्यपद्यमय होता है इसमें विभ्राड्दर्शी कवि धर्मता होती है एवं यह हितकारी उपदेश देता है। यह काव्य शास्त्रपूवक होने से शास्त्रों का अनुसरण करता है।

कुछ आचार्यों का मत है कि वार्ता कामसूत्र शिल्पशास्त्र तथा दण्डनीति ये चार विद्यास्थान है पूर्वोक्त चौदहों विद्या स्थानों में जोड़ने से कुल १८ विद्यास्थान हो जाते हैं।

विद्यास्थानों के निरूपण के पश्चात् अब विद्याओं का निरूपण किया जा

कृत्स्नो लोकः स्वेषु स्वेषु कर्मस्ववतिष्ठते। "वार्त्ता दण्डनीतिर्द्वे विद्ये" इति बार्हस्पत्याः। वृत्तोर्विनयग्रहणं च स्थितिहेतुर्लोकयात्रायाः। "त्रयोवार्त्तादण्डनीतयस्तिस्त्रो विद्याः" इति मानवाः। त्रयी हि वार्त्तादण्ड-

---

दण्डभयाद् हि विहितकर्मण्यकृतेऽविहितकर्मणि कृते च मयि दण्ड आपतेदिति दण्डभिया, कृत्स्नो लोकः = निखिलो जनः स्वेषु स्वेषु कर्मसु = विहितस्वस्वकर्मसु, अवतिष्ठते = तत्परो भवति। दण्डभीत्यैव सर्वासां विद्यानामभ्युपासनादिकर्म सम्भावनया तदभावे तासामसेवनस्य ध्रुवत्वात् तां विना सर्वासामनुपास्यत्वेनाविद्यात्वं स्थिरमेवातो दण्डनीतिरेवैका प्रधानेति औसनसा वदन्ति। वार्हस्पत्यानां मतं निदर्शयन्नाह-

वार्ता दण्डनीतिरिति द्वे विद्ये स्वीकर्तव्ये। कृषिपाशुपाल्याभ्यां वणिज्यया च विना वित्तलाभस्यासम्भवाद् वित्तं विना लोकयात्राया एव दौःस्थ्यात् दण्डनीत्या सह वार्तापि संग्राह्येति द्वे विद्ये वार्हस्पत्या आमनन्ति। तदेव व्याख्याति वृत्तिविनयग्रहणञ्च = तद्धितान्तवार्तपदान्तर्गतवृत्तिशब्दस्य, द्वावर्थौ, जीवननिर्वाहौपयिकी वेतनाद्युपलब्धिः, गुर्वादिसमुदाचाररूपविनयग्रहणञ्च। अशिक्षितावृत्तिकस्य लोकयात्राया एव संदिग्धत्वे वार्ताविद्याऽप्यवश्यमेवोपास्या।

मानवानां मतमाह—त्रयी वार्ता दण्डनीतयस्तिस्रो विद्या इति मानवा। त्रयी=ऋग्यजुःसामवेदेति त्रयी "ब्राह्मणेन निष्कारणं षडङ्गोवेदोऽध्येयो ज्ञेयश्चे"ति वचनात् फलानुसन्धानं विनैव त्रय्या अध्ययनं विहितं लभ्यते। त्रय्या अध्ययनस्य प्रयोजनमपि निर्दिशति—त्रयी हि वार्तादण्डनीत्योरुपदेष्ट्री। वार्तादण्डनीत्योः किं स्वरूपं किञ्चप्रयोजनं कथमुपास्यत्वमित्याद्युपदेशस्त्रयीं विना न सम्भवतीत्युपदेशकरणमहिम्ना त्रय्या आवश्यकत्वं वरीवर्ति।

---

रहा है। आन्वीक्षिकी त्रयी वार्ता तथा दण्डनीति ये चार विद्यायें हैं। औसनस का मत है कि दण्डनीति ही एक (प्रधान) विद्या है। क्योंकि दण्ड के ही भय से सारा संसार अपने-अपने कर्तव्यों का अनुष्ठान करता है वृहस्पति के शिष्यों के मत में वार्ता एवं दण्डनीति दो विद्यायें हैं, क्योंकि विना वृत्ति के अर्थात् वेतनाद्युपलब्धि एवं शिष्टाचार के, लोकयात्रा ही नहीं चल सकेगी। मानवों के

त्योरुपदेष्ट्री । "आन्वीक्षिकीत्रयीवार्त्तादण्डनीतयश्चतस्रो विद्या" इति कौटल्यः । आन्वीक्षिक्या हि विवेचिता त्रयी, वार्त्तादण्डनीत्योः प्रभवति ।

---

कौटल्यस्तु—"आन्विक्षकी त्रयी वार्ता दण्डनीतयश्चतस्रो विद्याः" इति स्वीकरोति । तत्र त्रयीविशेष आन्विक्षिकी साख्यं योगो लोकायतञ्च । धर्माधर्मार्थानर्थनयानयानां वलाबलविचारणायामुपायभूता आन्वीक्षिकी धर्माधर्ममय्यां त्रय्याम् अर्थानर्थमय्यां वार्तायां नयानयमय्यां दण्डनीत्यां विवेचनां विदधाति । व्यसनेऽभ्युदिते च मतिमादधाति । एवञ्च प्रज्ञावाक्यक्रियाणां प्रकाशिकेयं लोकानामुपकर्त्री ।

उक्तञ्च कौटलीयार्थशास्त्रे—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता ॥

एतयाऽन्वीक्षिक्या विवेचिता त्रयी वार्तादण्डनीत्योः प्रयोगे साहाय्यं सम्पादयतीत्याह—

अथायमत्रसंग्रहः कामन्दकीयनीतिशास्त्रस्य श्रीखिस्तेमहाभागानां चन्द्रिकाटीकायाम्—

आन्विक्षिकीत्रयीवार्ता दण्डनीतिश्च शाश्वती ।
विद्याश्चतस्र एवैता लोकसंस्थितिहेतवः ॥
त्रयी वार्ता दण्डनीतिस्तिस्रो विद्या हि मानवाः ।
त्रय्या एव विभागोऽयं येयमान्वीक्षिकी मता ॥
वार्ता च दण्डनीतिश्च द्वे विद्ये इत्यवस्थिताः ।
लोकस्यार्थप्रधानत्वाच्छिष्याः सुरपुरोधसः ॥

---

मत में त्रयी वार्ता तथा दण्डनीति ये तीन ही विद्यायें होती हैं । क्योंकि त्रयी ही आन्वीक्षिकी से विवेचित होकर वार्ता एवं दण्डनीति का उपदेश देती है । कौटिल्य के मत में आन्वीक्षिकी, त्रयी वार्ता तथा दण्डनीति चारों विद्यायें होती हैं । क्योंकि त्रयी भी अकेली वार्ता एवं दण्डनीति का उपदेश नहीं कर सकती । जब वह आन्वीक्षिकी से विवेचित होती हैं तभी वार्त्ता एवं दण्डनीति के उपदेश में समर्थ होती है ।

"पञ्चमी साहित्यविद्या" इति यायावरीयः। सा हि चतसृणामपि विद्यानां निष्यन्दः। आभिर्धर्मार्थौ यद्विद्यात्तद्विद्यानां विद्यात्वम्। तत्र त्रयी व्याख्याता। द्विधा चान्वीक्षिकी पूर्वोत्तरपक्षाभ्याम्। अर्हद्भदन्तदर्शने

एकैव दण्डनीतिस्तु विद्येत्यौशनसाः स्थिताः।
तस्यां हि सर्वविद्यानामारम्भाः सम्प्रतिष्ठिताः॥
विद्याश्चतस्त्र एवैता इति नो गुरुदर्शनम्।
पृथक्-पृथक् प्रसिद्ध्यर्थं यासु लोको व्यवस्थितः।
आन्वीक्षिक्यात्मविज्ञान धर्माधर्मौ त्रयीस्थितौ॥
अर्थानर्थौ तु वार्तायां दण्डनीत्यां तथेतरौ।
आन्वीक्षिकी त्रयी वार्ता सतीर्विद्याः प्रचक्षते॥ इति।

यायावरीयो राजशेखरः स्वकीयं मतमुपस्थापयति। पञ्चमी=अनुपदोदीरितातिरिक्ता पञ्चमी साहित्यविद्येति। धर्मार्थवित्तिप्रयोजकत्वमेव विद्यात्वम्। तत्तु यथा पूर्वोक्तासु आन्वीक्षिक्यादिषु तथैव साहित्यविद्यायामपि। तथा हि अनभ्यस्तविद्यान्तराणां साहित्यविद्याया निर्मातृत्वेऽप्रवृत्तौ सर्वासां विद्यानां सारभूतेयं साहित्यविद्या रसिकैरविरतास्वाद्यमानत्वेनापरोक्षानन्ददायिनी प्रसिद्धा। विद्यात्वं लक्षयति। आभिः=एताभिः पञ्चभिर्, यद् धर्माथौं=धर्मार्थपुरुषार्थौ विद्यात्=जानीयात् तद्=तस्मादेतासां विद्यानां विद्यात्वं बोध्यम्। तत्र=तासु विद्यासु, त्रयी=ऋग्यजुःसामवेदत्रयी, व्याख्याता=पूर्वं व्याख्यानविषयीकृता।

आन्वीक्षिकीं व्याख्याति—आन्वीक्षिकी च द्विधा=द्विविधा, पूर्वोत्तरपक्षाभ्याम् =पूर्वपक्षात्मिकोत्तरपक्षात्मिके च। आन्वीक्षिक्याः स्वरूपं तु तद्व्युत्पत्त्यैव लभ्यम्। अनु—प्रत्यक्षागमाभ्यामनु ईक्षणं=प्रमितस्यावेक्षणमन्वीक्षा, तत्सम्बन्धि

यायावरीय राजशेखर के मत में पाँचवीं विद्या साहित्य विद्या भी मानी जाती है। क्योंकि शास्त्रालोचन पूर्वक साहित्य विद्या का निर्माण होने से यह चारों विद्याओं का सारभूत तत्त्व है। इन सभी पाँचों विद्याओं से धर्म एवं अर्थ का बोध होता है इसलिये इन विद्याओं का विद्यात्व भी सिद्ध है।

उन विद्याओं में त्रयी का व्याख्यान पहले ही कर चुके हैं। आन्वीक्षिकी

लोकायतं च पूर्वपक्षः । साङ्ख्यं न्यायवैशेषिकौ चोत्तरः । त इमे षट्तर्काः ।

तत्र च तिस्रः कथा भवन्ति वादो, जल्पो, वितण्डा च । मध्यस्थयोस्तत्त्वावबोधाय वस्तुतत्त्वपरामर्शो वादः । विजिगीषोः स्वपक्षसिद्धये

---

शास्त्रमान्वीक्षिकमिति सा विद्या आन्वीक्षिकी वेति । तत्र पूर्वपक्षान्विक्षिक्याम् अर्हद्दर्शनं = जैनदर्शनं, भदन्तदर्शनं=बौद्धदर्शनं, लोकायतं=चार्वाकदर्शनम् चास्ति । उत्तरपक्षान्वीक्षिक्यां साख्यं = सांख्यदर्शनम् न्यायवैशेषिकौ=न्यायदर्शनं वैशेषिकदर्शनञ्च । एवञ्चोक्तदर्शनषट्सु पूर्वोक्तत्रयमनीश्वरमवैदिकञ्च । उत्तरत्रयं सेश्वरं वैदिकञ्च । त इमे =पूर्वोत्तरे षट्तर्काः=अर्हद्भदन्तलोकायत-सांख्यन्यायवैशेषिकाः, इति षट्दर्शनानि । भवन्ति ।

तत्र=एतेषु, तिस्रः कथाः भवन्ति, १— वादः १—जल्पो ३—वितण्डेति ।

तत्रवादः—मध्यस्थयोः=परस्परजिगीषाद्युदासीनयोः, तत्त्वबुभुत्सयोः तत्त्वावबोधाय=यथार्थवस्तुसमधिगतये, वस्तुत्वपरामर्शो = वस्तुतत्त्वविवेकः, वादः =वादाख्या कथा ।

जल्पं निरूपयति—विजिगीषोः =परस्परं जेतुमभिलाषिणोः, स्वपक्षसिद्धये = स्वतर्कसिद्धये, विजेतुं वा, छलजातिनिग्रहादिपरिग्रहो =छलस्य; अर्थविकल्पैर्वचनविघातात्मकस्य, जातेः =हेतुप्रतिबिम्बनप्रायस्य प्रत्यवस्था-

---

पूर्व एवं उत्तर भेद से दो प्रकार की होती है। पूर्वान्वीक्षिकी, जैन बौद्ध एवं चार्वाक दर्शन कही जाती है उत्तरान्वीक्षिकी सांख्य न्याय एवं वैशेषिक दर्शन होती है। इनमें उत्तर आन्वीक्षिकी ही त्रयी का विवेक करती है क्योंकि यही सेश्वर एवं वैदिक है पूर्व आन्वीक्षिकी अवैदिक तथा अनीश्वर होती है। इस प्रकार छः दर्शन आन्वीक्षिकी कहे जाते हैं।

इन तर्कों ( दर्शनों ) में वाद, जल्प एवं वितण्डा तीन कथायें होती हैं। इनमें वाद प्रकृतिस्थ दो विचारकों का तत्त्वज्ञान के लिये किया जाता हुआ वस्तु-तत्व परामर्श, वाद कहा जाता है। दो विजय की इच्छा रखने वाले व्यक्ति, छल-जाति एवं निग्रहादि का परिग्रह कर जब अपने पक्ष की सिद्धि करने लगते हैं तो वहाँ जल्प नामक कथा होती है। अपने पक्ष को उपस्थित न कर केवल दूसरे के पक्षों को दूषित करने वाली वितण्डा कही जाती है।

छलजातिनिग्रहादिपरिग्रहो जल्पः। स्वपक्षस्यापरिग्रहित्री परपक्षस्य दूषयित्री वितण्डा। कृषिपाशुपाल्ये वणिज्या च वार्त्ता। आन्वीक्षिकीत्रयीवार्त्तानां योगक्षेमसाधनो दण्डस्तस्य नीतिर्दण्डनीतिः। तस्यामायत्ता लोकयात्रेति शास्त्राणि। सामान्यलक्षणं चैषाम्—

**सरितामिव प्रवाहास्तुच्छाः प्रथमं यथोत्तरं विपुलाः।**

---

नात्मकस्य जातिस्वरूपस्य, निग्रहादें=निग्रहाद्युपायान्तरस्यापि परिग्रहः=स्वीकारः, जल्पः=जल्पाख्यकथा। विजिगीषुकथा, शक्तिपरीक्षाफला वा।

वितण्डां दर्शयति––

स्वपक्षस्यापरिग्रहित्री=स्वपक्षस्यानवबोधिका, परपक्षस्य=प्रतिपक्षिणः पक्षस्य, दूषयित्री= दूषिका, वितण्डा। स्वपक्षं दुर्बलं मत्वा स्वपक्षोपस्थापने मन्दादरो यदा केवलं परपक्षं दूषयितुं यतते तदानीं वितण्डेति। वार्तामाह–कृषिपाशुपाल्ये=कृषिश्च पाशुपाल्यञ्च कृषिपाशुपाल्ये, वणिज्या=वणिक्कर्म च वार्ता भवति।

दण्डनीतिं दर्शयति–आन्वीक्षिकीत्रयीवार्तानां,=आन्वीक्षिक्याः=षट्तर्कात्मिकायाः पूर्वोक्तायाः, त्रय्याः=ऋग्यजुःसामवेदात्मिकाया त्रय्याः, वार्तायाः=कृषिपाशुपाल्यवाणिज्यात्मिकायाश्च, योगक्षेमसाधनः=प्राप्तिरक्षणयोः समर्थः, दण्डः, तस्य दण्डस्य नीतिः=प्राप्तिर्यया सा विद्या दण्डनीतिः। राजदण्डभयादेव कृत्स्नस्य लोकस्य व्यवस्थितत्वात् शास्त्राध्ययनस्य च सुव्यवस्थितलोकाधीनत्वाद् लोकयात्राशास्त्राध्ययनयोर्दण्डनीतिरेवमूलम्। तस्यां=दण्डनीतौ लोकयात्रा, आयत्ता=तदधीनेति दण्डनीतिः शास्त्रम्। एवञ्च शास्त्राणि निर्दिष्टानि।

एषां=शास्त्राणां, सामान्यलक्षणं,=सामान्यपरिचयं निर्दिशति—

ये शास्त्रसमारम्भाः सरितां प्रवाहा इव प्रथमं तुच्छा, यथोत्तरं विपुलास्, ते लोकस्य वन्द्या भवन्ति इति। ये शास्त्रसमारम्भाः=शास्त्रोद्योगाः, सरितां

---

कृषि, पशुपालन एवं वणिक् कर्म को वार्ता कहते हैं। आन्वीक्षिकी त्रयी तथा वार्ता के योग क्षेम का साधन दण्ड होता है। अतः दण्डनीति जहाँ हों उसे दण्डनीति कहते हैं। लोक यात्रा दण्डनीति के ही अधीन होती है। इस प्रकार शास्त्रों का निरूपण कर दिया गया।

इन शास्त्रोंका सामान्य परिचय इस प्रकार समझना चाहिये। जैसा कि

**ये शास्त्रसमारम्भा भवन्ति लोकस्य ते वन्द्याः॥**

**सूत्रादिभिश्चैषां प्रणयनम्। तत्र सूत्रणात् सूत्रम्। यदाहुः--**

**'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।**
**अस्तोभमनवद्यञ्च सूत्रं सूत्रकृतो विदुः॥**

**सूत्राणां सकलसारविवरणं वृत्तिः। सूत्रवृत्तिविवेचनं पद्धतिः।**

---

=नदीनां, प्रवाहाः=जलौघा इव, प्रथमं=पूर्वं तुच्छाः=सूत्रात्मकत्वेनोद्गमकालावच्छिन्नत्वेन स्वल्पा, यथोत्तरं=यथाक्रमं पश्चात् विपुलाः=विस्तृताकाराः, ते=यद्पदपरामृश्याः शास्त्रसमारम्भाः, लोकस्य=सर्वस्य, वन्द्याः=आदरणीया भवन्ति। गोपुच्छमुखानीव पूर्वं स्वल्पाकाराणि यथाक्रमं वृहदाकाराणि शास्त्राणि भवन्तीति भावः।

एषां प्रणयनप्रकारं निर्दिशति–सूत्रादिभिः=सूत्रवृत्तिपद्धतिभाष्यसमीक्षा टीकापञ्जिकाकारिकावार्त्तिकादिभिः, प्रणयनं=निर्माणञ्च एषां=शास्त्राणां भवति। प्रणयनसाधनेषु प्रथमं सूत्रं व्युत्पादयति--तत्र=तेषुसाधनेषु, सूत्रं=प्रथमं साधनं सूत्रं सूत्रणात्=संसूचनाद् उच्यते। सूत्रलक्षणमाचार्या आहुः=सूत्रकृतः अल्पाक्षरम् असंदिग्धं सारवद् विश्वतोमुखम् अस्तोभम् अनवद्यं च विदुः इति। सूत्रकृतः=महर्षयः, सूत्रकर्तारः, अल्पाक्षरं=अनधिकाक्षरं, असंदिग्धं=संदेहशून्यं, अल्पाक्षरत्वेन संदेहावसरं विज्ञायासंदिग्धं द्वितीयं विशेषणं, सूत्रस्योपात्तम्। सारवत्=गम्भीरार्थवत्, विश्वतोमुखं=चतुरस्त्रं सर्वत्रान्वयित्वं

---

कहा गया है—

वे शास्त्र समारम्भ संसार में वन्दनीय होते हैं जो प्रारम्भ में नदियों के प्रारम्भिक प्रवाह की तरह संक्षिप्त होते हैं तथा क्रमशः धीरे-धीरे बढ़ते जाते हैं। अर्थात् सरिद्वेणीवद् या गोपुच्छवत् शास्त्रसमारम्भ वन्द्य है। सूत्रादि से निर्मित होने पर इनकी ऐसी स्थिति सम्भव है अतः कहते हैं कि—

इनका निर्माण सूत्रादि से होता है विस्तृत विषय को भी संक्षेप में निबद्ध करने से सूत्र कहा जाता है। जैसा कि अग्निपुराण में प्रतिपादित सूत्र का यह लक्षण—

सूत्रकारोंने सूत्रका लक्षण इसप्रकार समझा है कि जो अनधिक अक्षरों वाला हो संदेह से रहित हो अभीप्सित गंभीर अर्थ का प्रतिपादक हो तथा

आक्षिप्य भाषणाद्भाष्यम्। अन्तर्भाष्यं समीक्षा। अवान्तरार्थविच्छेदश्च सा।
यथासम्भवमर्थस्य टीकनं टीका। विषमपदभञ्जिका पञ्जिका। अर्थप्रदर्शन

---

वा, अस्तोभम् = स्तोभं, निष्फलम्, तदभावे सफलमिति सप्रयोजनमितिभावः। अनवद्यम् = निर्दुष्टं, सूत्रं, विदुः = विदन्ति। "विदो लटो वा"।

वृत्तिलक्षणमाह-सूत्राणां, सकलसारविवरणं = सूत्रसम्बन्धिसकलतत्त्वप्रतिपादिका वृत्तिः। पद्धतिलक्षणमाह—सूत्रवृत्तिविवेचनं = सूत्रं च वृत्तिश्च सूत्रवृत्ती तयोर्विवरणमिति कर्तव्यताकत्वेन विवेचनं = विवेको यत्र सा पद्धतिः। भाष्यमाह—आक्षिप्य = सूत्रार्थं पूर्वपक्षत्वेनाक्षिप्य सन्दूष्य भाषणं = उत्तरपक्षत्वेन सिद्धान्तप्रवचनं यत्र तद्भाष्यम्।

**समीक्षामाह**—अन्तर्भाष्यं = भाष्यमध्ये या समीक्षा = पदार्थसमीक्षणं सा समीक्षेति। समीक्षाया एव रूपान्तरं लक्षयति। अवान्तरार्थविच्छेदश्च सा = अवान्तरस्य = मध्येपतितस्य अर्थस्य = पदार्थस्य विच्छेदः = विभागः, समीक्षा।

**टीकामाह**—यथासम्भवं = पदार्थसम्भावनामतिक्रम्य अर्थस्य = पदार्थस्य टीकनं प्रकाशनं टीका।

**पञ्जिकामाह**—विषमपदभञ्जिका = विषमाणां दुरूहाणां पदानां = सुप्तिङ्न्तानां भञ्जिका = विश्लेषिका, पञ्जिका।

**कारिकामाह**—अर्थप्रदर्शनकारिका = सूत्राद्यर्थप्रदर्शनकारिका छन्दोबद्धा कारिका।

**वार्तिकमाह**-उक्तानुक्तदुरुक्तचिन्ता = ग्रन्थकृता येऽर्था उक्ताः = अभिहिताः

---

चतुरस्त्र, व्यापक, व्यर्थ शब्दों से हीन अर्थात् साभिप्राय शब्दपूर्ण, एवं निर्दोष हो उसे सूत्र कहते हैं।

सूत्रोंके समस्त गूढ रहस्योंका विवरण करनेवाली व्याख्या वृत्ति कही जाती है। सूत्र एवं वृत्ति दोनों की विवेचना जिसमें होती है उसे पद्धति कहते हैं। अनेक ( शंकाओं ) प्रतिप्रश्नों को उठाकर उनका समुचित समाधान जहाँ विस्तृत विवेचन के माध्यम से किया जाय उसे भाष्य कहते हैं। भाष्यके अवान्तर अर्थों का स्पष्टीकरण, अथवा समीक्षण समीक्षा कही जाती है। केवल कठिन पदों को अलग कर उन्हें सरल शब्दों से व्यक्त करना पञ्जिका कही

कारिका कारिका । उक्तानुक्तदुरुक्तचिन्ता वार्त्तिकमिति शास्त्रभेदाः ।

**भवति प्रथयन्नर्थं लीनं समभिप्लुत स्फुटीकुर्वन् ।**
**अल्पमनल्पं रचयन्ननल्पमल्पं च शास्त्रकविः ॥**

शास्त्रैकदेशस्य प्रक्रिया प्रकरणम् । अध्यायादयस्त्ववान्तरविच्छेदाः ।

---

अनुक्ताः = अनभिहिताः, दुरुक्ताः = असमञ्जसाभिहितास्तेषां चिन्ता = विचारो यत्र तद् शास्त्रं वार्तिकमिति । एवञ्चैते शास्त्रभेदाः दर्शिताः ।

शास्त्रभेदान् निर्दिश्य शास्त्रकविम् प्रशंसति–भवति इति–

लीनम् अर्थं प्रथयन् समभिप्लुतं स्फुटीकुर्वन् अल्पम् अनल्पम्, अनल्पम् च अल्पं रचयन् शास्त्रकविर्भवति इत्यन्वयः । लीनं = गुप्तम् अभीष्टमाच्छन्नं दा, अर्थं = वाच्याद्यर्थं, प्रथयन् = प्रकटयन्, विस्तारयन् वा अभिप्लुतं = वाच्यान्तरसम्बन्धेनान्तःनिगीर्णं संदिग्धार्थं वा स्फुटीकुर्वन्, अल्पं = संक्षिप्तम् अनल्पं = विस्तृतम्, अनल्पं = विस्तृतं, अल्पं संक्षिप्तञ्च रचयन् = निर्मान् शास्त्रकविर्भवति ।

शास्त्रैकदेशान् निरूपयन्–तत्र **प्रकरणमाह–**

शास्त्रैकदेशस्य = शास्त्रमनेक प्रकरणं भवति अतः प्रकरणं शास्त्रैकदेशः । अत उच्यते, शास्त्रैकदेशस्य = शास्त्रैकभागस्य प्रक्रिया = क्रियाकलापःप्रकरणम् ।

**अध्यायादीन् निरूपयति**–प्रकरणस्यैवावान्तरभेदाः = प्रयोजनवशाद् विहिता, अवान्तरविच्छेदाः, अध्यायादयः = अध्यायपरिच्छदोच्छ्वाससमुल्लासादयः । एते

---

जाती है । सूत्र के अर्थ को छन्दोवद्ध सरल रूप में प्रदर्शन करने वाली, कारिका कही जाती है । सूत्रोंमें उक्त, अनुक्त एवं दुरुक्त विषयों का विचार करने वाला वार्तिक कहा जाता है ।

शास्त्रों के भेदोंको वतलाकर शास्त्रकवि की प्रशंसा करते हैं कि–वह शास्त्र कवि होता है जो शब्दों के गूढ़ अर्थ को प्रकट करता है स्वार्थ प्रतिपादन में असमर्थ समभिप्लुत शब्दों को स्पष्ट करता है तथा संक्षिप्तार्थ को विस्तृत एवं विस्तृतार्थ को संक्षिप्त करता है ।

शास्त्रैकदेश के निरूपण में प्रकरण का लक्षण करते हुए कहते हैं कि–शास्त्र के

कृतिभिः स्वतन्त्रतया प्रणीता इत्यपरिसङ्ख्येया अनाख्येयाश्च ।

शब्दार्थयोर्यथावत्सहभावेन विद्या साहित्यविद्या । उपविद्यास्तु चतुःषष्टिः ताश्च कला इति विदग्धवादः । स आजीवः काव्यस्य । तमौपनिषदिके वक्ष्यामः ।

---

शास्त्रकारैः कृतिभिः स्वतन्त्रतया प्रणीतत्वेन, असंख्येयाः = संख्यातुमशक्याः, अनाख्येयाश्च = आख्यातुम शक्याश्चेति ।

**(साहित्यविद्यां)** लक्षयति—शब्दार्थयोः = वाच्यवाचकयोः यथावत् = याथार्थ्यमनतिक्रम्य, अर्थात् समुचितार्थं प्रतिपादयितुं कश्चनैव वाचकः वाचकान्तरवैलक्षण्येन क्षमः, एवमेवार्थोऽपि स्वपर्यायीभूतार्थान्तरापेक्षया काव्येषु क्षमः, अत एतादृशोः वाच्यवाचकयोः परस्पर्धित्वेन यत्र यथावत् सहभावः, सा साहित्य विद्या । विद्यास्थानाद् विद्याया यद्किञ्चिद्वैलक्षण्येनोपस्थापनात् काव्याद् साहित्यविद्याया अपि वैलक्षण्यं प्रतिपत्तव्यम् । **(उपविद्यामाह)**—उपविद्यां = मुख्यविद्यामुपजीव्य प्रवृत्ता उपविद्याश्चतुषष्ठिः । विदग्धास्ता एव कला वदन्ति । अत उक्तम् ताश्च कला इति विदग्धवादः । सः = विदग्धवादः काव्यस्य = शब्दार्थात्मकस्य, आजीवः = प्राणप्रदः । काव्यस्य वैदग्ध्यमूलत्वात् । तं = विदग्धवादं, औपनिषदिके = अध्याये, वक्ष्यामः ।

उपसंहरति—इत्यनन्तो इति ।

इति = अत्र, अभियुक्तानाम् अनन्तः संरम्भविस्तरः निपुणधीगम्यः । ग्रन्थगौरवकारणात् त्यक्तः ।

---

किसी एक भाग की प्रक्रिया को प्रकरण कहते हैं। प्रकरण के ही अध्याय उच्छ्वासः परिच्छेदादि, अवान्तर विभाग हैं। जो शास्त्रकारों की स्वतन्त्रता पर निर्भर होने से असंख्य एवं अनाख्येय ( अकथनीय ) है।

शब्द एवं अर्थका यथावत् सहभाव अहमहमिकया शब्दान्तर की अपेक्षा शब्द एवं अर्थान्तर की अपेक्षा अर्थ का जो साहचर्य उसे साहित्यविद्या कहते हैं। उपविद्यायें चौसठ प्रकार की होती हैं। विदग्धो के मत में वे ही विद्यायें कला है। कला, या विदग्धवाद ही काव्य का जीवन है। उस विदग्धवाद का निरूपण औपनिषादिक अध्याय में आगे करेंगे।

**इत्यनन्तोऽभियुक्तानामत्र संरम्भविस्तरः ।**
**त्यक्तो निपुणधीगम्यो ग्रन्थगौरवकारणात् ॥**

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे
द्वितीयोऽध्यायः शास्त्रनिर्देशः ।

---

अभियुक्तानां = विदुषां अत्र-शास्त्रे अनन्तः = असंख्यः. संरम्भविस्तरः = समुद्योगविस्तरः, यो निपुणधीगम्यः = सुधीगम्यः, स्वयमेव सुधीभिरूह्यः, तदुह्यत्वेन प्रतिपादनं व्यर्थं, यतोहि ग्रन्थस्य गौरवं भविष्यति अतः व्यर्थप्रतिपादनपरग्रन्थगौरवकारणात् त्यक्तः ।

काशीहिन्दूविश्वविद्यालयाध्यापकेन, सनातनकविशिष्येण श्रीमदम्बिकप्रसादस्य सूनुना, डॉ० चन्द्रमौलिद्विवेदिना पूरितेयं संस्कृत व्याख्या ।

---

इस प्रकार-अभियुक्त विद्वानों के अनन्त समारम्भ हैं जो सुधियों से स्वयं जाने जा सकते हैं। यहाँ ग्रन्थ के विस्तार के भय से उनका निरूपण छोड़ दिया गया है ।

# तृतीयोऽध्यायः

## काव्यपुरुषोत्पत्तिः

एवं गुरुभ्यो गिरः पुण्याः पुराणीः श्रृणुमः स्म, यत्किल धिषणं शिष्याः कथाप्रसङ्गे पप्रच्छुः, कीदृशः पुनरसौ सारस्वतेयः काव्यपुरुषो वो गुरुः? इति। स तान् वृहताम्पतिरूचे।

पुरा पुत्रीयन्ती सरस्वती तुषारगिरौ तपस्यामास। प्रीतेन मनसा तां विरिञ्चिः प्रोवाच—पुत्रं ते सृजामि। अथैषा काव्यपुरुषं सुषुवे। सोऽभ्युत्थाय सपादोपग्रहं छन्दस्वतीं वाचमुदचीचरत्—

---

काव्यपुरुषस्योत्पत्तिं दिदर्शयिषुः श्रीराजशेखरो ग्रन्थकृत् तस्यैवान्तेवासिनो धिषणस्य मुखात् प्रस्तोतुमुपक्रमते—स्वकीयां काव्यपुरुषोत्पत्तिसम्बन्धिनीं वाचमकल्पितां गुरुपरम्परयागतां दर्शयन्नाह—एवं = इत्थं गुरुभ्यः = आचार्येभ्यः पुण्याः = पुण्यकरीः पुराणीः = पुरातनीः गिरः = वाचः श्रृणुमःस्म = आकर्णयामः स्म। यत् किल, धिषणं=वृहस्पतिं, शिष्याः = तत्शिष्याः, कथाप्रसङ्गे = कदाचिच्चर्चायां पप्रच्छुः = पृष्टवन्तः, असौ = वर्ण्यमानः, वो गुरुः = युष्माकं गुरुः सारस्वतेयः सरस्वतीसुतः कीदृशः इति। स = वृहस्पतिश्च तान् = शिष्यान् ऊचे = उवाच।

पुरा = पूर्वं पुत्रीयन्ती = पुत्रम् इच्छन्ती सरस्वती, तुषारगिरौ = हिमालये तपस्यामास = तपस्तेपे। प्रीतेन मनसा = प्रसन्नेन चेतसा तां = सरस्वतीं विरिञ्चिः = व्रह्मा, प्रोवाच—पुत्रं = सुतं ते सृजामि = उत्पादयामीति। अथैषा = अनन्तरमेषा सरस्वती काव्यपुरुषं एतदाख्यं पुत्रं सुषुवे=जनयामास।

सः = काव्यपुरुषः, अभ्युत्थाय सपादोपग्रहं = चरणस्पर्शपूर्वकं छन्दस्वतीं = सच्छन्दस्कां, वाचं = वाणीं उदचीचरत् = उच्चारयामास।

---

### तृतीय अध्याय

हम अपने गुरुवों से पुण्य एवं प्राचीन वाणियों को इस प्रकार सुनते आये हैं कि शिष्यों ने कथाप्रसंग में एकबार वृहस्पति से पूछा था कि वह सारस्वतेय काव्यपुरुष कैसा है जो आपलोगोंका गुरु है वृहस्पति ने शिष्यों से कहा—

पहले पुत्र की इच्छा से सरस्वती हिमालय पर तपस्या की। प्रसन्न ब्रह्मा ने सरस्वती से कहा कि मैं तेरे लिये पुत्र उत्पन्न करता हूँ। इसके बाद वह

यदेतद्वाङ्मयं विश्वमर्थमूर्त्या विवर्त्तते।
सोऽस्मि काव्यपुमानम्ब ! पादौ वन्देय तावकौ ॥।

तामाम्नायदृष्टचरीमुपलभ्य भाषाविषये छन्दोमुद्रां देवी ससम्मद-मङ्कपर्यङ्केनादाय तमुदलापयत् । "वत्स ! सच्छन्दस्काया गिरः प्रणेत-र्वाङ्मयमातरमपि मातरं मां विजयसे । प्रशस्यतमं चेदमुदाहरन्ति यदुत

---

हे अम्ब = मातः ! यद् एतद् विश्वं = निखिलं वाङ्मयं = स्वरूपार्थे मयट् शब्दस्वरूपमित्यर्थः ! आदिसृष्टौ ब्रह्मणा भूरिति उच्चार्य भूः सृष्टा, एवं भुवः स्वरिति, निखिला सृष्टिस्तत्तपदोच्चारणानन्तरं समजायत इति वाङ्मयम् एव विश्वम् । अर्थमूर्त्या = घटपटाद्यर्थस्वरूपेण विवर्त्तते = विवर्त्त रूपेण प्रकटीभवति । स एव = शब्दस्वरूप एव, अहं काव्यपुमान् अस्मि, तावकौ = त्वदीयौ, पादौ = चरणौ वन्दे = नमामि । एवञ्चार्थविवर्त्तकवाङ्मयाभिन्नस्वरूपम् काव्यपुमानिति प्रतिपादितम् ।

तां = सच्छन्दस्कां तां वाचं, आम्नायदृष्टचरीं = वेदमात्रेषु दृष्टपूर्वाम्, भाषाविषये = लौकिकभाषाविषये, उपलभ्य = प्राप्य, ससम्मदं = सहर्षं, अङ्कपर्यङ्केनादाय = अङ्कपल्यङ्के संस्थाप्य तं = काव्यपुमांसं उदलापयत् = प्रशशंस । प्रशंसन्त्याह—सच्छन्दस्काया = छन्दोबद्धायाः, गिरः = वाचः प्रणेतः ! = निर्मातः ! हे वत्स ! वाङ्मयमातरं अपि = सकलवाक्प्रपञ्चजननीमपि मातरं = स्वजननीं मां, = सरस्वतीं विजयसे = पराभवसि । इदं = एतद् प्रशस्यतमम् = परमं

---

सरस्वती काव्यपुरुष को पैदा की । वह काव्यपुरुष उठकर चरणग्रहण पूर्वक माँ को प्रणाम करता हुआ छन्दोमय वाणी का उच्चारण किया ।

हे अम्ब ! मैं वही विश्वरूप काव्य पुरुष हूँ जो विश्व वाङ्मय स्वरूप है । ( शब्दोच्चारण से ही ब्रह्मा ने भूर्भुवः आदि लोकों का निर्माण किया था ) तथा पदार्थ रूप में विवर्तित है । अर्थात् पदार्थ रूप में परिणत होकर दृष्टि-गोचर है । अतः वही विश्वरूप काव्यपुरुष मैं तुम्हारे चरणोंकी वन्दना करता हूँ ।

'पुत्रात्पराजयो द्वितीयं पुत्रजन्म" इति। त्वत्तः पूर्वे हि विद्वांसो गद्यं ददृशुर्न पद्यम्। त्वदुपज्ञमथातः छन्दस्वद्वचः प्रवर्त्स्यति। अहो! श्लाघनीयोऽसि। शब्दार्थौ ते शरीरं, संस्कृतं मुखं, प्राकृतं बाहुः जघनमपभ्रंशः, पैशाचं पादौ, उरो मिश्रम्। समः प्रसन्नो मधुर उदार ओजस्वी चासि।

---

प्रशस्यं च उदाहरन्ति यदुत = यत् पुत्रात्पराजयो द्वितीयं पुत्रेति जन्मेति। पुत्रात् पराजयोऽपि द्वितीयं पुत्रजन्मवद् हर्षद इति। त्वत्तः—त्वत् पूर्वे = प्राचीनाः विद्वांसः = बुधाः, गद्यं = छन्दोरहितं शास्त्रं ददृशुः, न, पद्यम् = छन्दोबद्धम्। अथातः = इतःप्रभृति, त्वदुपज्ञं = त्वदाद्यज्ञानं, छन्दस्वद् = सच्छन्दस्कं, वचः = वाक्यं प्रवर्त्स्यति = प्रचरिष्यति। अहो = विस्मयास्पदम्। श्लाघनीयोऽसि = प्रशंसनीयोऽसि।

काव्यपुरुषस्य स्वरूपमवयवसंस्थानं वा वर्णयन्नाह—

ते = तव काव्यपुरुषस्य, शरीरं = वपुः शब्दार्थौ = शब्दार्थात्मकम्, मुखं = प्रधानमाननं, संस्कृतम् = संस्कृतभाषा, बाहुः = भुजः प्राकृतं = प्राकृतभाषा, जघनं = ऊरु, अपभ्रंशः = अपभ्रंशभाषा, पादौ = चरणौ, पैशाचं = पैशाची भाषा, उरो = वक्षस्थलम् मिश्रम् = प्राकृताद्यवान्तरभाषामिश्रणात्मकम्। त्वयि, समताप्रसादमाधुर्यौदार्यौजोगुणाः सन्ति, अतस्त्वं समः प्रसन्नो मधुर उदार,

---

पहले जो केवल वेदों में ही देखी जाती रही वह छन्दोमयी वाणी भाषा में भी देखकर देवी सरस्वती सहर्ष गोद में लेकर काव्यपुरूष की प्रशंसा करने लगी। छन्दोमयीं वाणीके प्रणेता हे वत्स! तूने अपनी माँ जो वाङ्मय की भी जननी है, उसे जीत लिया है। उचित ही कहा जाता है कि पुत्र से पराजय द्वितीय पुत्रके जन्म के समान आनन्द देता है। तुमसे पहले विद्वानों ने भाषा में गद्य देखा था पद्य नहीं। (तुम्हारा प्रथम ज्ञान स्वरूप) त्वदुपज्ञ यह छन्दोमयी वाणी अब से प्रवर्तित होगी। अहो तुम प्रशंसनीय हो।

काव्य पुरुष के, अवयव संस्थान का वर्णन करते हुए कहते हैं कि—

शब्द एवं अर्थ तुम्हारा शरीर है संस्कृत मुख है प्राकृत भाषा भुजा हैं अपभ्रंश भाषा जघन है (कटिका अग्रभाग जघन कहा जाता है) पैशाचीभाषा दोनों चरण हैं तथा मिश्र भाषा वक्षस्थल है। समता, प्रसन्नता, मधुरता, उदारता तथा ओजस्विता गुणों से युक्त हो। तुम्हारी वाणी प्रतिपादन (उक्ति)

उक्तिचणं च ते वचो, रस आत्मा, रोमाणि छन्दांसि, प्रश्नोत्तरप्रवह्लिकादिकं च वाक्केलिः, अनुप्रासोपमादयश्च त्वामलंकुर्वन्ति ! भविष्यतोऽर्थस्याभिधात्री श्रुतिरपि भवन्तमभिष्टौति--

चत्वारि शृङ्गास्त्रयोऽस्य पादा द्वे शीर्षे सप्तहस्तासोऽस्य ।

---

ओजस्वी चासि । ते = तव, वचः = वाग् उक्तिचणं = वक्रोक्तिनिपुणम् आत्मा = जीवनाधायकः, रसः = शृङ्गारादिः, रोमाणि = लोमानि, छन्दांसि = छन्दोजातयः, वाक्केलिः = वचःक्रीडा, प्रश्नोत्तरप्रवह्लिकादिकम् = प्रश्नोत्तरप्रहेलिकादिकम् । अलङ्काराः = अनुप्रासोपमादयश्च त्वाम् अलङ्कुर्वन्ति । भविष्यतोऽर्थस्याभिधात्री भाविनोऽर्थस्य ज्ञापयित्री, श्रुतिः = वेदमाताऽपि भवन्तं = त्वां अभिष्टौति = समान्तात् स्तौति ।

ऋग्वेदसंहितायां तृतीयाष्टकेऽष्टमेऽध्याये दशममण्डलस्यस्तृतीयं सूक्तमिदम्-चत्वारि इति । भिन्नैर्भिन्नैः शास्त्रकारैः स्वानुकूलमर्थमस्यानुसंधाय सूक्तमिदं व्याख्यातम् । सायणो यज्ञमनु, पतञ्जलिर व्याकरणमनु, भरतो मुनिः काव्यमनु व्याख्यातवन्तः पूर्वम् ।

काव्यपरतयास्य व्याख्यानम् यथा-

अस्य, चत्वारि = भारत्यादिवृत्तयश्चत्वारि शृङ्गाणि, अभिधादितिस्रो वृत्तयस्त्रयः पादाः, प्रकृतिप्रत्ययौ द्वे शीर्षे, प्रत्येकमभिव्यञ्जकत्वात्काव्याङ्गत्वम् अनयोः । निषादादयः सप्तस्वराः, नामाख्यातोपसर्गनिपातकर्मप्रवचीयगत्यव्ययाः, सप्तहस्ताः । वैदर्भ्यादित्रितयरज्जुभिर्निबद्धो वृषभः काव्यपुरुषो रोरवीति=शब्दायते एवम्भूतो महानसौ देवो मर्त्यान् मर्त्यलोकानाविवेश । श्री ख्रिस्ते महाभागास्तु

---

में निपुण है रस ही तुम्हारी आत्मा है छन्दगण रोंगटे हैं प्रश्नोत्तर एवं पहेलियाँ आदि तुम्हारी वाणी की क्रीड़ा हैं अनुप्रास तथा उपमा तुम्हें अलंकृत कर रहे हैं । भावी अर्थों का भी वर्णन करने वाली श्रुति भी तुम्हारी स्तुति कर रही है ।

वह काव्यपुरुष रूप वृषभ शब्द करता हुआ मर्त्यलोक में आविर्भूत हुआ है जो महान् देव है इसकी भारती आदि चारो वृत्तियाँ चार सींग हैं अभिधादि तीनों वृत्तियाँ इसके तीन चरण हैं प्रकृति तथा प्रत्यय इसके दो सिर हैं निषादऋषभ आदि सात स्वर या नाम आख्यात आदि इसके सात हाथ हैं । वैदर्भी

त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्या (र्त्यां) नाविवेश ॥

"तथापि संवृणु प्रगल्भस्य पुंसः कर्म, बालोचितं चेष्टस्व" इति निगद्य निवेश्य चैनमनोकहाश्रयिणि गण्डशैलतलतल्पे स्नातुमभ्रगङ्गां जगाम। तावच्च कुशान् समिधश्च समाहर्तुं निःसृतो महामुनिरुशनाः परिवृत्ते पूषण्यूष्मोपप्लुतं तमद्राक्षीत्। कस्यायमनाथो बाल इति चिन्तयन्स्वमाश्रमपदमनैषीत्। क्षणादाश्वस्तश्च स सारस्वतेयस्तस्मै छन्दस्वतीं वाचं

नाट्यशास्त्रमनु व्याख्यानमेनं स्वटीकायां निर्दिष्टवन्तः–

यथा–शृंगस्थानीयाश्चत्वारो वर्णाः पादस्थानीयानि त्रीणिस्थानानि शीर्षस्थानीयो[1] द्विविधः काकुः, हस्तस्थानीयाः सप्तस्वराः, ईदृशोऽसौ वृषभः काव्यपुरुषस् त्रिधा त्रिप्रकारैर् मन्दमध्योच्चैः स्वरैः, बद्धः=उच्चारितः सन् रोरवीति=शब्दायते। एवंभूतो महानसौ देवो मर्त्यान् आविवेश। मर्त्येषु प्रविष्टः इत्यर्थः। इति।

तथापि एवम्भूतोऽपि विशिष्टोऽपि त्वं, प्रगल्भस्य=धृष्टस्य प्रकृष्टस्य, पुंसः=पुरुषस्य कर्म=क्रियां, संवृणु=गोपायाच्छकर्थ। बालोचितं=बालसुलभं, चेष्टस्व=कुरुष्व। इति निगद्य=उक्त्वा अनोकहाश्रयिणि=वृक्षादधश्छायायां गण्डशैलतलतल्पे=च्युतस्थूलोपलतलशय्यायां एनं=काव्यपुरुषं, निवेश्य=संस्थाप्य स्नातुं, अभ्रगङ्गां=आकाशगङ्गां, जगाम। तावत्=तन्मध्य एव कुशान् समिधश्च=दर्भकाष्ठादीन् समाहर्तुं=एकत्रीकर्तुं निःसृतः, महामुनिः, उशनाः=भार्गवः, परिवृत्ते=इतरदिगवलम्बिते पूषणि=सूर्ये, ऊष्मोपप्लुतं=सूर्यरश्मिसंतप्तं तं=बालं अद्राक्षीत्। कस्यायमनाथो बालइति=कस्यायमेकाकी शिशुरिति चिन्तयन् स्वाश्रमपदं स्वस्थानं अनैषीत्। क्षणादाश्वस्तश्च सः=क्षणेन

---

आदि तीनों रीतियाँ इसकी तीन रस्सियाँ हैं जिससे बँधा हुआ है।

फिर भी प्रौढ़ पुरुषोचित इस अपने व्यवहार को रोको तथा बालोचित जैसी चेष्टायें करो। ऐसा कहकर सरस्वती वृक्ष की छाया में स्थूल पत्थर की शय्या पर उसे सुलाकर आकाश गंगा में स्नान करने के लिए चली गई।

इधर कुश एवं समिधा के लिए निकले हुए महामुनि उशना ने सूर्य के दूसरी ओर चले जाने से पड़ती हुई धूप, से तापित उस शिशु को देखा। तथा "किसका यह अनाथ बालक है" ऐसा सोचते हुए वे उसे अपने आश्रम में ले

---

1. शीर्षस्थानीया द्विविधा काकुरिति साधु।

समचारयत् । अकस्माद्विस्मापयन्स चाभ्युवाच—

या दुग्धाऽपि न दुग्धेव कविदोग्धृभिरन्वहम् ।
हृदि नः सन्निधत्तां सा सूक्तिधेनुः सरस्वती ॥ इति ।

तत्पूर्वकमध्येतृणां च सुमेधस्त्वमादिदेश ।

ततः प्रभृति तमुशनसं सन्तः कविरित्याचक्षते । तदुपचाराच्च कवयः

---

विश्रमितश्च स, काव्यपुरुषशिशुः, सारस्वतेयः, तस्मै = भार्गवाय छन्दस्वतीं = सच्छन्दस्कां वाचं = वाणीं समचारयत् = उदचारयत् । अकस्माद् = झटिति स्वभावाद्, वा स च = उशना अपि, विस्मापयन् = परान् विस्मयास्पदान् कुर्वन् अभ्युवाच = अवदत् ।

सा, सूक्तिधेनुः = सदुक्तिकामगवी, नः = अस्माकं हृदि, सन्निधत्तां = सान्निध्यं कल्पयतु । या = सदुक्तिधेनुः, अन्वहं = प्रतिदिनमहर्निशं कविदोग्धृभिः = कवयितृदोहकैः दुग्धाऽपि = कृतदोहनाऽपि, नदुग्धेव = अदुग्धेव, अकृतदोहनेव, भाति । शब्दार्थाहरणोपायैः कृतोपयोगाऽपि, शब्दार्थसामग्रीपरिपूर्णा भाति । सरस्वत्या अक्षय्यत्वं दर्शितम् ।

एतन्मन्त्रमुक्त्वा अस्य फलमपि स्वयमुशना उवाच—तत्पूर्वकम् = एतत्श्लोकपूर्वकं, अध्येतृणां = अध्ययनशीलानां, विद्याभ्यासं कुर्वतां, लोकानां, सुमेधस्त्वं = सुप्रतिभत्वं आदिदेश ।

ततः प्रभृति = तत्कालाद्, सन्तः = विद्वांसः तमुशनसं = तं भार्गवं कविरिति = कविसंज्ञया, आचक्षते = कथयन्ति । तदुपचाराद् = भार्गवादन्येषु कविशब्दप्रयोगो लाक्षणिकः, मुख्यस्तु भार्गव एव कविरिति तदु-

---

आये । कुछ ही समय के बाद विश्रमित आश्वस्त उस बालक ने छन्दोमयी वाणी का उच्चारण किया । महामुनि उशना ने भी विस्मित करते हुए अचानक बोल पड़े ।

कविगण रूपी ग्वालों से, शब्द रूप दुग्ध के आहरण के माध्यम से निरन्तर दुही जाती हुई भी जो विना दुही हुई सी प्रतीत होती है वह सूक्ति सरस्वती रूपी कामधेनु मेरे हृदय में निवास करे । इति ।

कवय इति लोकयात्रा। कविशब्दश्च कवृ वर्णे इत्यस्य धातोः काव्यकर्मणो रूपम्। काव्यैकरूपत्वाच्च सारस्वतेयेऽपि काव्यपुरुष इति भक्त्या प्रयुञ्जते। ततश्च विनिवृत्ता वाग्देवी तत्रपुत्रमपश्यन्ती मध्येहृदयं चक्रन्द। प्रसङ्गागतश्च वाल्मीकिर्मुनिवृषा सप्रश्रयं तमुदन्तमुदाहृत्य भगवत्यै भृगुसूतेराश्रमपदमदर्शयत्। सापि प्रस्नुतपयोधरा पुत्रायाङ्कपालीं ददाना शिरसि चुम्बन्ती स्वस्तिमता चेतसा प्राचेतसायाऽपि महर्षये निभृतं सच्छन्दांसि

---

पचारात् = लाक्षणिकात् कवयः कवय इति = अन्यत्रापि कविपदप्रयोगात् कवयः कवय इति विद्वांसः ऊचिरे। इति लोकयात्रा = लोकव्यवहारः। कविशब्दस्य व्युत्पत्तिं लक्षयति—कवृवर्णे इत्यस्य, काव्यकर्मणो धातोः = काव्यंकर्म यस्य तस्य धातोः, रूपम् = साधुरूपम्।

सारस्वतेयस्य काव्यपुरुषशब्दप्रवृत्तिनिमित्तत्वं लक्षयति—सारस्वतेये काव्यपुरुषप्रयोगः भक्त्या = लक्षणया विद्वांसः प्रयुञ्जते काव्यैकरूपत्वं सम्बन्धो हेतुत्वेन दर्श्यते काव्यैकरूपत्वादिति। ततः = स्नानात् विनिवृत्ता = पुनरागता वाग्देवी = सरस्वती तत्र = गण्डशैलतलतल्पे, पुत्रं, = स्वसुतं सारस्वतेयं, अपश्यन्ती = अनवलोकयन्ती, मध्येहृदयं = अन्तर्हृदयम् चक्रन्द = क्रन्दितवती। प्रसङ्गागतः = कार्यादागतः मुनिवृषा = मुनिश्रेष्ठः, वाल्मीकिः, सप्रश्रयं = सविनयं तमुदन्तं = तं वृत्तान्तं, उदाहृत्य = प्रतिपाद्य भगवत्यै सरस्वत्यै, भृगुपतेः = शुक्राचार्यस्य, आश्रमपदम् = आश्रमस्थानम् अदर्शयत्। सापि = सरस्वत्यपि, प्रस्नुतपयोधरा = निमग्नवात्सल्यरसा, पुत्राय, अङ्कपालीं = क्रोडथालीं ददाना, शिरसिचुम्बन्ती = वात्सल्यानुभावं दर्शयन्ती, स्वास्तिमता, चेतसा = विगताधिना

---

इस श्लोकमन्त्र का पहले पाठकर जो अध्ययन करेगा उसे सुमेधा प्राप्त होगी। उशना ने ऐसे भी कहा।

तभी से विद्वान् उस उशना को "कवि" नाम से कहने लगे। उन्हीं की सहमता से दूसरे में भी कवि का लाक्षणिक व्यवहार होता आ रहा है। कवि शब्द कवृवर्णे धातु से किष्पन्न होता है जो धातु काव्यकर्म निष्पन्न करने वाली है। काव्य का ही स्वरूप होने से सारस्वतेय को भी काव्यपुरुष लक्षणया कहा जाने लगा।

वचांसि प्रायच्छत् ।

अनुप्रेषितश्च स तया निषादनिहतसहचरीकं क्रौञ्चयुवानं करुणक्रेङ्कारया गिरा क्रन्दन्तमुदीक्ष्य शोकवान् श्लोकमुज्जगाद ।

**मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।**
**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥**

---

चेतसा, प्राचेतसाय वाल्मीकये, महर्षये, निभृतं=तूष्णीं अनुच्चरितं यथा स्यात्तथा सच्छन्दांसि = छन्दोमयानि, वचांसि, प्रायच्छत् = प्रादात् ।

तया = सरस्वत्या, अनुप्रेषितः=अनुप्रेरितः, निषादनिहितसहचरीकं क्रौञ्च युवानं=निषादेन निहता सहचरी यस्य स तादृशं क्रौञ्चयुवानं, करुणक्रेङ्कारया =करुणघर्घरया, गिरा=ध्वनिना क्रन्दन्तं=चीत्कुर्वन्तं, उदीक्ष्य=विलोक्य, शोकवान्=सशोकः श्लोकम् उज्जगाद=पद्यं निर्जगाद । श्लोकन्तं निर्दिशति-मा निषादेति ।

हे निषाद ! शाश्वतीः समाः=शतं वर्षाणि, नैकानि वर्षाणि, वा, त्वम्, प्रतिष्ठां = स्थितिं सुखं वा, मा अगमः=न लभस्व । प्रतिष्ठानवाप्तौ हेतुमाह-यत् = यतो हि, क्रौञ्चमिथुनात्=क्रौञ्चयुगलात् एकं=युगलादेकं, काममोहितं= कामासक्तं, अवधीः=हतवान् । अत्र महर्षेः शोकावेगे स्त्रीपुंसयोरेकतरनिहतत्वमात्रं हेतुस्तत्र स्त्रियो वा पुंसोवाऽकिञ्चित्करत्वात् । यथा क्रौञ्चवधः शोककरस्तथैव क्रौञ्चीवधोऽपि इति क्रौञ्च्या वधो राजशेखरस्यात्राभिमतः । तर्हि कथं

---

स्नान से लौटी हुई सरस्वती पुत्र को न पाकर मन ही मन तदनन्तर रोने लगी । किसी कार्यवश उपस्थित मुनिपुङ्गव वाल्मीकि सहानुभूतिपूर्वक-बच्चे के वृत्तान्त को बतलाया तथा भगवती सरस्वती को भार्गव का आश्रम दिखला दिया । वह वत्सला सरस्वती भी पुत्र को गोद में उठाती हुई तथा उसके सिर को पुत्रस्नेह से चूमती हुई शान्त चित्त होकर महर्षि बाल्मीकि को छन्दोमयी वाणी के लिए हार्दिक वरदान दी ।

सरस्वती से अनुप्रेरित वाल्मीकि ने निषाद से जिसकी सहचरी मार दी गई है ऐसे करुण चीत्कार करते हुए क्रौञ्चयुवक को देखकर अत्यन्त शोकाकुल हो इस श्लोक को अनायास बोल उठे ।

ततो दिव्यदृष्टिर्देवी तस्मा अपि श्लोकाय वरमदात्, यदुतान्यदनधीयानो यः प्रथममेनमध्येष्यते स सारस्वतः कविः संपत्स्यत इति। स तु महामुनिः प्रवृत्तवचनो रामायणमितिहासं समदृभत्, द्वैपायनस्तु श्लोक-

---

एकामिति नोक्तम् श्लोके, तत्र एकपदस्य सामान्यत उपादाने नपुंसकत्वमिति विचार्यम्, युगलादेकम्, भवतु, तत्र सहचरी सहचरो वा। केश्चित्तु–निषादनिहत सहचरीकां क्रौञ्चयुवानं = निषादेन निहतः सहचरो यस्या सा निहतनिषाद-निहतसहचरी चरेष्टः" ङित्वात्ङीप्प्रत्ययः। निषादनिहतसहचरी एव निषाद-निहतसहचरीकास्ताम्। क्रौञ्चयुवानमित्यत्र क्रौञ्चो युवा यस्याः सा ताम्, "वनोर च"इतिङीपः प्राप्तौ, "मनः" "अनोबहुव्रीहेः' इति डीपो निषेधात्,"डाबुभाभ्यामन्यतरस्यां" इति विकल्पेन डाप् प्रत्यये क्रौञ्चयुवा, क्रौञ्चयुवे। डाबभावे क्रौञ्चयुवा क्रौञ्चयुवानौ इत्यादि रूपमवसेयम्। एवं साधुत्वेऽपि निषादेति, क्रौञ्चयुवानमिति पदयोः स्त्रीलिङ्गत्वे किन्तु क्रन्दन्तीत्यस्य स्त्रीत्वं दुरुपपादम्।

ततः = तदनन्तरं दिव्यदृष्टिः = लोकोत्तरज्ञा, देवी सरस्वती, तस्मैं श्लोकाय = प्राचेतसोच्चरिताय अपि = एकस्मैं, पूर्वं वरमदात्इदानीम् अन्यस्मैं अपि वरमदादिति। वरमाह–यच्च, अन्यदनधीयानः = अन्यत्राकृताध्ययनः, यः = जनः प्रथमं = आदौ, एनमध्येष्यते = श्लोकमिमं पठिष्यति, सः जनः सारस्वतः, कविः सम्पत्स्यते। इति।

सतु महामुनिः, प्रवृत्तवचनः = ( काव्ये ) तत्परवचनः, रामायणं रामायणाख्यं, इतिहासं = पुराणैकभागमेकनायकम्, समदृभत् = व्यरचयत्।

---

हे निषाद! कई वर्षों तक तूं प्रतिष्ठा न प्राप्त कर, क्योंकि तुमने क्रौञ्च पक्षी की जोड़े से काममोहित एक का वध कर दिया है।

तब दिव्यदृष्टि भगवती सरस्वती उस श्लोक के लिए भी वर दिया कि जो दूसरा व्यक्ति बिना कुछ पढ़े पहले पहल इस श्लोक का पाठ करेगा वह सारस्वत कवि होगा।

महामुनि वाल्मीकि भी स्वाभाविक वाणी के प्रवृत्त होने पर रामायण नामक इतिहास का प्रणयन किया। द्वैपायन वेदव्यास ने भी इस श्लोके को सबसे पहले पढ़ा तथा इसी के प्रभाव से एक लाख श्लोकों की महाभारत संहिता का

प्रथमाध्यायी तत्प्रभावेन शतसाहस्रीं संहितां भारतम्। एकदा तु ब्रह्मर्षि-वृन्दारकयोः श्रुतिविवादे दाक्षिण्यवान्देवः स्वयम्भूस्तामिमां निर्णेत्री-मुद्दिदेश। उपश्रुतवृत्तान्तश्च मातरं व्रजन्तीं सोऽनुवव्राज। वत्स ! परमे-ष्ठिनाऽननुमतस्य ते न ब्रह्मलोकयात्रा निःश्रेयसायेत्यभिदधाना हठान्न्य-वर्तयदेनमात्मना तु प्रववृते। ततः स काव्यपुरुषो रुषा निश्चक्राम। प्रियं मित्रमस्य च कुमारः साक्रन्दं रुदन्नभ्यधीयत गौर्या, तत ! तूष्णी-

---

द्वैपायनस्तु=व्यासस्तु, श्लोकप्रथमाध्यायी=श्लोकाद्याध्यनशीलः, तत्प्रभा-वेण=तदध्यनोत्पन्नवैशिष्ट्येन शतसाहस्रीं संहितां=लक्षपद्यात्मिकां संहितां, भारतम्=महाभारतम् समंदृभत् !

काव्यतत्त्वान्याख्यातुं काव्यपुरुषस्य रुषा निष्क्रमणाय भूमिकां निदर्शयति—एकदा तु, ब्रह्मर्षिवृन्दारकयोः=ब्रह्मर्षिदेवयोः श्रुतिविवादे=वेदविषयकशास्त्रार्थे संजाते, दाक्षिण्यवान्=समदृष्टिः, सर्वेषु तुल्यदृष्टिः, देवः स्वयम्भूः=देवो ब्रह्मा तामिमां=सरस्वतीमिमां निर्णेत्रीं=निर्णायिकां उद्दिदेश=उद्दिष्टवान्। उपश्रुतवृत्तान्तः=ज्ञातोदन्तः, विवादं निर्णेतु स्वर्लोकोद्यतेयमिति ज्ञात्वा, सः काव्य-पुरुषो मातरं=जननीं व्रजन्तीं=गच्छन्तीं अनुवव्राज=अनुजगाम। सा तु—वत्स परमेष्ठिनाननुमतस्यब्रह्मणानाज्ञाप्तस्य ते=तव, ब्रह्मलोकयात्रा=स्वःयात्रा न निःश्रेयसाय=क्षेमाय, इत्यभिदधाना=इति कथयन्ती हठाद् ततः=अव-रोधात् स काव्यपुरुषः रुषा=क्रोधेन, निश्चक्राम=निर्गतवान्। तद्विरहेण, साक्रन्दं रुदन्=करुणाकेङ्कारं रुदन् अस्य मित्रं कुमारः=कार्तिकेयः गौर्या=पार्वत्या

---

निर्माण किया।

एक बार ब्रह्मर्षि एवं देवताओं में वेद सम्बन्धी शास्त्रार्थ के प्रवर्तित होने पर उभयत्र समभाव रखने वाले ब्रह्मा ने इसी सरस्वती को निर्णेत्री बनाया। काव्यपुरुष भी इस वृत्तान्त को सुनकर ब्रह्मलोक को जाती हुई मा का अनुसरण किया ! सरस्वती ने "ब्रह्मा की अनुमति के बिना तुम्हारी ब्रह्मलोक यात्रा तुम्हारे हित में नहीं होगी" ऐसा कहती हुई उसे हठात् मर्त्यलोक लौटा दी तथा तथा स्वयं ब्रह्मलोक जाने में तत्पर रही।

माता के इस व्यवहार से रुष्ठ होकर काव्यपुरुष अपने स्थान से निकल पड़ा। उसे जाते हुए देखकर उसके प्रियमित्र कुमार चीत्कार पूर्वक रोने लगे।

मास्स्व साऽहमेषा निषेधामीति निगदन्ती समचिन्तयत्। प्रायः प्राणभृतां प्रेमाणमन्तरेण नान्यद् बन्धनमस्ति, तदेतस्य वशीकरणं कामपि स्त्रियं सृजामीति विचिन्तयन्ती साहित्यविद्यावधूमुदपादयदादिशच्चैनामेष ते रुषा धर्मपतिः पुरः प्रतिष्ठते तदनुवर्त्तस्वैनं निवर्तय च। भवन्तोऽपि हन्त मुनयः काव्यविद्यास्नातकाश्चरितमेतयोः स्तुध्वमेतद्धि वः काव्यसर्वस्वं भविष्यतीत्यभिधाय भगवती भवानी जोषमासिष्ट। तेऽपि तथा कर्त्तुमवतस्थिरे।

---

धरुधीयत=उक्तः। तुष्णीमास्व=जोषंतिष्ठ, एषाहं तं निषेधामि=परावर्तयामीति निगदन्ती=वदन्ती, समचिन्तयत्। प्रायः प्राणभृतां=प्राणिनां प्रेमाणमन्तरेण=प्रेम विना, नान्यद्वन्धनं, अस्ति। तत्=तस्मात् एतस्य=काव्यपुरुषस्य, वशीकरणं=वशीकरणसाधनं, कामपि स्त्रियं सृजामि=उत्पादयामि इति विचिन्तयन्ती, साहित्यविद्यावधूं, उदपादयत्=प्रादुरभावयत्। आदिशच्चैनां =आज्ञापयामास चैनां, एष ते धर्मपतिः, काव्यपुरुषः, रुषा=क्रोधेनः पुरः=अग्रे, प्रतिष्ठते प्रव्रजति। तद्=तस्माद् अनुवर्तस्वैनं=एनं अनुव्रज, निवर्तय=परावर्तय च! काव्यस्नातकान्च समादिशति–हन्त भवन्तोऽपि मुनयः, काव्यविद्यास्नातका एतयोः=वरवध्वोः चरितम्=कार्यजात स्तुध्वम्=प्रशंसत। एतद्हि, व युष्माकं, काव्यसर्वस्वं=काव्यतत्त्वं भविष्यतीति अभिधाय=उक्त्वा भगवती भवानी जोषमासिष्ठ=तूष्णीं बभूव। तेऽपि= काव्यस्नातका अपि तथाकर्तुं=यथादेशं कर्तुं अवतस्थिरे=स्थितः।

---

माता गौरी ने समझाते हुए कहा कि हे पुत्र, शान्त रहो, मैं उसे लौटाती हूँ। ऐसा कहकर सोचने लगी। प्रायः प्राणियों का, प्रेम के बिना कोई दूसरा बन्धन नहीं है। अतः इसका आकृष्ट करनेवाली किसी स्त्री को पैदा करूँ ऐसा सोचती हुई साहित्यविद्यावधू को पैदा की, तथा उसे आदेश दी कि यह तुम्हारा धर्म-पति रोष से आगे जा रहा है इसका तू अनुसरण कर तथा इसे लौटा ले। और आप काव्यविद्यास्नातक सभी मुनि इन दोनों के चरित की स्तुति करें। यही आप लोगों का काव्य सर्वस्व होगा ऐसा कहकर भगवती पार्वती चुप हो गई। वे विद्यास्नातक एवं वधू वैसा ही करने के लिए प्रस्तुत हो गये।

अथ सर्वे प्रथमं प्राचीं दिशं शिश्रियुर्यत्राङ्गवङ्गसुह्मब्रह्मपुण्ड्राद्या जनपदाः। तत्राऽभियुञ्जाना तमौमेयी यं वेषं यथेष्टमसेविष्ट, स तत्रत्याभिः स्त्रीभिरन्वक्रियत। सा प्रवृत्तिरौड्रमागधी। तां ते मुनयोऽभितुष्टुवुः—

---

प्रवृत्तिवृत्तिरीतीर्लक्षयितुमुपक्रमते—अथ = अनन्तरं, सर्वे = भावि वर-वधूस्नातकाः, प्रथमं = पूर्वं, प्राचीं = पूर्वांदिशं = काष्ठां शिश्रियुः = श्रितवन्तः। यत्राङ्गवङ्गसुह्मब्रह्मपुण्ड्राद्या जनपदाः। यथोक्तं नाट्यशास्त्रे—

अङ्गा वङ्गाःकलिङ्गाश्च वत्साश्चैवोड्रमागधाः।
पौण्ड्रा नैपालिकाश्चैव अन्तर्गिरिवहिर्गिराः॥
तथाप्लवङ्गमाहेन्द्र मलदामलवर्त्तकाः।
ब्रह्मोत्तरप्रभृतयो भार्गवा मार्गवास्तथा॥
प्राग्ज्यौतिषाः पुलिन्दाश्च वैदेहास्ताम्रलिप्तकाः।
प्रांशुप्रवृत्तयश्चैव युज्यन्ती चौड्रमागधी॥

(ना० शा० अ० १३-३९-४१)

तत्र = प्राच्यां, देशेषु, तमभियुञ्जाना = काव्यपुरुषमनुच्छन्दयन्ती, औमेयी = उमासुता, साहित्यविद्या, यथेष्टं यं वेषम्, असेविष्ट = सेवितवती, स = वेषः, तत्रत्याभिः = तत्रस्थायिनीभिः स्त्रीभिः, अन्वक्रियत = अनुकृतः। सा प्रवृत्तिः = प्राचीस्थिताप्रवृत्तिः औड्मागधी। चतुर्धा प्रवृत्तिर्नाट्यशास्त्रे निर्दिष्टा यथा—

चतुर्विधा प्रवृत्तिश्च प्रोक्ता नाट्यप्रयोक्तृभिः।
आवन्ती दाक्षिणात्या च पाञ्चाली चौड्रमागधी॥

( ना० शा० अ० १३/३२ )

सैवोड्रमागधी काव्यमीमांसायां निर्दिष्टा। तामौड्रमागधीं, ते = स्नातका-मुनयः, अभितुष्टुवुः = अभिष्टुतवन्तः। आर्द्रार्द्रेति—

---

इसके बाद काव्यविद्यास्नातक एवं वधू सभी पूर्वदिशा की ओर चल पड़े। जहाँ अङ्ग, वङ्ग, सुह्म, ब्रह्म एवं पुण्ड्रादि जनपद है काव्यपुरुष का अनुच्छंदन करती हुई वह साहित्य विद्यावधू इच्छानुसार जिस वेष को धारण की। उसका वहाँ की स्त्रियों ने भी अनुसरण किया। वह वेषरचना औड्रमागधी वृत्ति कही जाती है। वे काव्यविद्यास्नातक इसकी स्तुति इस प्रकार किये।

"आर्द्रार्द्रचन्दनकुचार्पितसूत्रहारः
सीमन्तचुम्बिसिचयः स्फुटबाहुमूलः ।
दूर्वाप्रकाण्डरुचिरास्वगुरूपभोगाद्
गौडाङ्गनासु चिरमेष चकास्तु वेषः ॥"

यदृच्छयाऽपि यादृङ्नेपथ्यः स सारस्वतेय आसीत् तद्वेषाश्च पुरुषा बभूवुः । साऽपि सैव प्रवृत्तिः । यदपरं नृत्तवाद्यादिकमेषा चक्रे सा भारती

---

दूर्वाप्रकाण्डरुचिरासु गौडाङ्गनासु, आर्द्रार्द्रचन्दनकुचार्पितसूत्रहारः सीमन्तचुम्बिसिचयः स्फुटबाहुमूलः वेषः अगुरूपभोगात् चिरं चकास्तु । इत्यन्वयः ।

दूर्वाप्रकाण्डरुचिरासु=दूर्वास्तम्बमनोहरासु, सन्धिमन्निविडावयवासु तन्वीषु गौडाङ्गनासु=गौडकामिनीषु, आर्द्रार्द्रचन्दनकुचार्पितसूत्रहारः, आर्द्रार्द्रं चन्दनं ययोस्तौ, आर्द्रार्द्रचन्दनौ यौ कुचौ=स्तनौ, तयोः अर्पितः स्थापितः सूत्रहारः, यस्मिन्, स वेषः, सीमन्तचुम्बिसिचयः=सीमन्तं=केशवेशं, चुम्बतीति चुम्बि, सीमन्तचुम्बि, सिचयं=वस्त्रं यस्मिन् सः वेषः, स्फुटबाहुमूलः=स्फुटं=विवृतं बाहुमूलं=कुचपरिसरः, यस्मिन् सः वेषः, अगुरूपभोगात्=ताम्बूलादिसेवनात्, वा कालागुरुवासनया, "आमोद्यगुरुवासनः" इति भागुरिमतम्, आमोदीमुखवासनः इत्यन्ये, ( अमरकोषः ) । तथा च "कालागुर्वगुरुस्यात्तु इत्यप्यमरः । उभयार्थपरतयागुरुपदस्य व्याख्यानंकृतम् । चिरं=चिरकालं चकास्तु=शोभताम् । ताम्बूलादानेनागुरुवासनया वा वेषसौन्दर्यस्य परोत्कर्षतापादानाद् हेतुत्वेनोपादानमुचितमेव । यदृच्छया=स्वेच्छया, यादृङ्नेपथ्यः=यादृग्वेषः स सारस्वतेयः काव्यपुरुषः आसीत्, तद्वेषाः=तादृशो वेषो येषां ते, तादृशाः पुरुषा बभूवुः । साऽपिपुरुषवेषात्मिका प्रवृत्तिः सैव, औड्रमागधी एव ।

प्रवृत्तिं निर्दिश्य वृत्तिमाह—यदपरं नृत्यवाद्यादिकं एषा=साहित्यव-

---

दूर्वा के प्रकाण्ड के समान सन्धिपूर्ण विभिन्न अवयवों वाली गोरी गौडाङ्गनाओं का वह वेष अगुरु, (ताम्बूल या सुगन्धित धूप) के उपभोग से चिरकाल तक शोभित हो । जिसमें गीले चन्दन से युक्त कुचों पर सूत्रहार लटके हुए हैं, घूंघट सीमन्त (केशवेश) भाग तक है तथा स्तनों का परिसर स्पष्ट दीख पड़ रहा है ।

स्वेच्छया सारस्वतेय भी जैसा अपना वेष रखा वहाँ के पुरुषों ने भी वैसा ही वेष स्वीकार किया । वह भी वेष रचना औड्रमागधी ही कही जाती

वृत्तिः। तां ते मुनय इति समानं पूर्वेण। तथाविधाकल्पयाऽपि तया यदवशंवदीकृतः समासवदनुप्रासवद्योगवृत्तिपरम्परागर्भं जगाद सा गौडीया

---

धूश्चक्रे, सा वृत्तिः भारतीति ज्ञाता। सा भारतीवृत्तिर्बभूवेत्यर्थः। तां ते मुनयः पूर्ववद् अभितुष्टुवुः। वृत्तयोऽपिचतुष्प्रकारिका भारती सात्वती-कैशिकी-आरभटीति। नाट्यशास्त्रे अच्युतमधुकैटभयोर्नियुद्धमनुजाता इमा इति विशेऽध्याये प्रतिपादितम्। तत्रैवोक्तं—

भाष्यतो वाक्यभूयिष्ठा भारतीयं भविष्यति।

तथा च—

या वाक्प्रधाना पुरुषप्रयोज्या,
स्त्रीवर्जिता संस्कृतवाक्ययुक्ता।
स्वनामधेयैर्भरतैः प्रयुक्ता,
सा भारती नाम भवेत्तु वृत्तिः॥ (ना० शा० अ० २०/२५)

प्राच्यां रीतिं दर्शयति—तथाविधाकल्पयाऽपि = अनुपदोक्तार्द्रार्द्रचन्दनेत्यादिवेष रचनयाऽपि, तया = औमेय्या, यदवशंवदीकृतः = यदनधीनीकृतः, स यदा, समासवद् = समासबहुलं, अनुप्रासवद् = वर्णावृत्यात्मकानुप्रासयुतं, योगवृत्ति-परम्परागर्भम् = योगवृत्त्या संवलिता या परम्परा, रूढिस्तया गर्भितम्। अभिधा-वृत्तिस्त्रेधा, योगः, रूढिः योगरूढिश्च। तत्र योगरूढिगर्भितस्थले च रूढ्या प्रसिद्धेऽर्थे नियन्त्रिते योगापहरणस्य सकलतन्त्रसिद्धतया तेनैव वाक्येन यदा योगार्थस्य प्रतिपादनं तदा वैचित्र्यावबोधनेन व्यञ्जना अभियुक्तैः स्वीक्रियते यथोक्तं पश्चाद्वर्तिना श्रीपण्डितराजेन—

---

है। यह औमेयी वधू, जो और कुछ नृत्यवाद्यादि की, उसे भरतीवृत्ति कहते हैं, इस वृत्ति की भी स्तुति मुनियों ने पूर्ववत् की।

उस प्रकार की वेष भूषा एवं विलासादि से भी वह औमेयी उसे वश में नहीं कर सकी। उससे अनधीन सारस्वतेय ने, समासबहुल अनुप्रास-युक्त एवं योगरूढिगर्भ जो कुछ कहा उसे गोड़ीया रीति कहते हैं। उस रीति की भी स्तुति मुनियों ने पूर्ववत् की। वृत्ति एवं रीति का लक्षण यथा अवसर कहेंगे।

रीतिः। तां ते मुनय इति समानं पूर्वेण। वृत्तिरीतिस्वरूपं यथावसरं वक्ष्यामः। ततश्च स पाञ्चालान्प्रत्युच्चचाल यत्र पञ्चालशूरसेनहस्तिनापुरकाश्मीरवाहीकबाह्लीकबाह्लवेयादयो जनपदाः। तत्राऽभियुञ्जाना तमौमेयीति समानं पूर्वेण। पाञ्चालमध्यमा प्रवृत्तिः। तां ते मुनयोऽभितुष्टुवुः—

ताटङ्कवल्गनतरङ्गितगण्डलेख-

---

योगरूढस्य शब्दस्य योगे रूढ्या नियन्त्रिते।
धियं योगस्पृशोऽर्थस्य या सूते व्यञ्जनैव सा॥ (रस०ग०द्वि०)

अतः योगवृत्तिपरम्परागर्भं=अभिधामूलव्यञ्जनागर्भं इति वक्तुं शक्यम्। जगाद=गदितवान् सा गौडीया रीतिः। तामपि मुनयः समभितुष्टुवुः। एवञ्चात्र प्राचीदिशः प्रवृत्तिवृत्तिरीतयः क्रमशः औड्रमागधी-भारतीगौडीया निर्दिष्टाः।

नाट्यशास्त्रे वृत्तिनिर्देशो यथा—

भारती सात्वती चैव कैशक्यारभटी तथा।
चतस्रो वृत्तयो ह्येता यासु नाट्यं प्रतिष्ठितम्॥ (ना०शा०अ० ६/२५)

वृत्तिरीतिस्वरूपं=वृत्तिरीतिलक्षणं यथावसरं=यथास्थानं वक्ष्यामः। ततश्च=ततो दिशो स काव्यपुरुषः पञ्चालान् प्रति उच्चलाल=तूर्णं चलितवान्। यत्र पञ्चालशूरसेनहस्तिनापुरकाश्मीरवाहीकवाह्लीकवाह्लवेयादयो जनपदाः। यथोक्तं नाट्यशास्त्रे—

पाञ्चालाः शौरसेनाश्च काश्मीरा हस्तिनापुराः।
वाह्लीकाः शाकलाश्चैव मद्रकौशीनरास्तथा॥
हिमवत्संश्रिता ये च गङ्गायाश्चोत्तरां दिशम्।
ये श्रिता वै जनपदास्तेषु पाञ्चालमध्यमा॥ (ना० शा० १३।४४-४५)

तत्राभियुञ्जाना औमेयी यथेष्टं वेषमसेविष्ट। सा पाञ्चालमध्यमाप्रवृत्तिः। तां प्रवृत्तिं मुनयोऽभितुष्टुवुः। ताटङ्केति…।

---

इसके बाद वह काव्यपुरुष पाञ्चाल देश की ओर चला। जहाँ पाञ्चाल, शूरसेन, हस्तिनापुर, काश्मीर, वाहीक, बाह्लीक, वाह्लवेय आदि जनपद हैं वहाँ भी काव्यपुरुषका अनुच्छन्दन करती हुई औमेयी यथेच्छ वेष धारण की। उस वेष रचना को पाञ्चालमध्यमा प्रवृत्ति कहते हैं! मुनियों ने इसकी भी स्तुति पूर्ववद की।

मानाभिलम्बिदरदोलिततारहारम् ।
आश्रोणिगुल्फपरिमण्डलितोत्तरीयं
वेषं नमस्यत महोदयसुन्दरीणाम् ॥

किञ्चिदार्द्रितमना यन्नेपथ्यः स सारस्वतेय आसीदिति समानं पूर्वेण । साऽपि यदीषन्नृत्तगीतवाद्यविलासादिकं दर्शयांबभूव सा सात्त्वती वृत्तिः । आविद्धगतिमत्त्वात्सा चारभटी । तां ते मुनय इति समानं पूर्वेण । तथा-

---

महोदयसुन्दरीणां ताटङ्कवलनतरङ्गितगण्डलेखं वेषं नमस्यत इत्यन्वयः । महेन=उत्सवेन उदय उत्कर्षो यासां तासां सुन्दरीणां वेषं, नमस्यत=प्रणमत । कीदृशं वेषंताटङ्कवलनतरङ्गितगण्डलेखम्=ताटङ्कयोः कर्णभूषणयोः, वलनेन=दोलनेन, तरङ्गिता=तरलिता गण्डलेखा यस्मिन् तम् । आनाभिलम्बिदरदोलिततारहारं=नाभिपर्यन्तं, लम्बी, लम्बमानः, दरदोलितः=इषत्तरङ्गितः तारः=उत्कृष्टःउज्ज्वलः हारो यस्मिन् तम् । आश्रोणिगुल्फपरिमण्डलितोत्तरीयम्=आश्रोणि, "कटिः श्रोणीककुद्मती" इत्यमरः । श्रोणीतोः गुल्फपर्यन्तं घुटिकापर्यन्तम्, (तद्ग्रन्थी घुटिके गुल्फौ इत्यमरः) परिमण्डलितम् अभितो मण्डलीकृतम् परिणद्धमित्यर्थः अन्तरीयं, उत्तरीयं =वासः यस्मिन् तम् । इति ।

ईदृशवेषेण किञ्चिदार्द्रमनाः, किञ्चिदासक्तमनाः, सारस्वतेयः=काव्यपुरुषः यन्नेपथ्यः=यादृग्वेष आसीत् तत्समानं पूर्वेण । पूर्ववद् सैव प्रवृत्तिरिति ।

प्रवृत्तिं निर्दिश्य वृत्तिं दर्शयति । साऽपि=औमेय्यपि यद् इषन्नृत्यगीत वाद्यविलासादिकं दर्शयाम्बभूव, सा सात्वती वृत्तिः । तथा च आविद्धगतिमत्वादारभटी अपि । पाञ्चालमध्यमाया सात्वत्यारभट्योः स्मरणं नाट्यशास्त्रेऽपि ।

---

महोदय सुन्दरियों के वेष को नमस्कार है जिसमें कपोल रचना कर्णभूषणों के कम्पन से तरलित ( भासित ) हो रही है तथा अधोवस्त्र ( घाघरा ) श्रेणी से घुटने तक लटक रहा है, एवं उज्ज्वल हार नाभिपर्यन्त लटकता हुआ थोड़ा-थोड़ा हिल रहा है ।

उससे थोड़ा आकृष्ट सारस्वतेय ने जिस वेष को धारण किया वहाँ के पुरुषों ने उसका अनुसरण किया । उसे भी पाञ्चालमध्यमाप्रवृत्ति कहते हैं ।

वह औमेयी भी जो थोड़ा नृत्य गीत वाद्यविलासादि को प्रदर्शित की वह सात्वती वृत्ति कही जाती है । यही सात्वती कुटिल गति होने पर

विधाकल्पयापि तया यदीषद्वशंवदीकृत ईषदसमासं ईषदनुप्रासमुपचार-गर्भञ्च जगाद सा पाञ्चाली रीतिः। तां ते मुनय इति समानं पूर्वेण। ततः सोऽवन्तीन्प्रत्युच्चचाल यत्रावन्तीवैदिशसुराष्ट्रमालवार्बुदभृगुकच्छा-दयो जनपदाः। तत्राऽभियुञ्जाना तमौमेयीति समानं पूर्वेण। सा प्रवृत्ति-

---

यथा—

पाञ्चालमध्यमायां तु सात्वत्यारभटीस्मृता।
प्रयोगस्त्वल्पगीतार्थं आविद्धगतिविभ्रमः॥ (ना० शा० १३/४३)

तामपिमुनयस्तुष्टुवुः।

तथाविधकल्पयाऽपि = तथाविधवेषरचनयाऽपि तया ईषद्वशंवदीकृतः=स्वल्प-मधीनीकृतः स काव्यपुरुषः, ईषदसमासं = किञ्चिदनुप्रासयुक्तम्, उपचारगर्भं यद् जगादसा पाञ्चाली रीतिः। "माधुर्यसौकुमार्योपपन्ना पाञ्चालीति" वामनः। तां रीतिं ते मुनयः पूर्वेण समानमभितुष्टुवुः इति।

ततः = ततो दिशः, सः = काव्यपुरुषः अवन्तीन् प्रति तूर्णं चलितवान्। यत्र अवन्तीवैदिशसुराष्ट्रमालवार्बुदभृगुकच्छादयो जनपदाः। यथोक्तम् नाट्यशास्त्रे—

आवन्तिका वैदिशिकाः सौराष्ट्रा मालवास्तथा।
सैन्धवास्त्वथ सौवीरा आनार्ता सार्बुदेयकाः॥
दाशार्णास्त्रैपुराश्चैव तथा वैर्वतिकावताः।
कुर्वन्त्यावन्तिकीमेते प्रवृत्तिं नित्यमेव तु॥

ना० श० वही ३६/३७

तत्राभियुञ्जानेति—यादृशं वेषमसेविष्ट सा प्रवृत्तिरावन्ती। प्रवृत्तिरियं

---

आरभटी भी कही जाती है। उसकी भी स्तुति मुनियो ने पूर्ववत् की। उस प्रकार की वेष विलासादि क्रिया से भी थोड़ा आकृष्ट चित्त सारस्वतेय ने थोड़ा शिथिल समासयुक्त कुछ अनुप्रासपूर्ण एवं सादृश्यगर्भ, जो कुछ कहा उसे पाञ्चाली रीति कहते हैं। उसकी भी स्तुति मुनियों ने पूर्ववत् की।

इसके बाद वह काव्यपुरुष अवन्ति देश की ओर चला। जहाँ अवन्ती वैदिश, सुराष्ट्र, मालव अर्बुद भृगु एवं कच्छ आदि जनपद है। वहाँ भी उसमें आसक्त वह औमेयी जो वेष धारण की उसे आवन्ती प्रवृत्ति कहते हैं। वह

रावन्ती। पाञ्चालमध्यमादाक्षिणात्ययोरन्तरचारिणी हि सा। अत एव सात्वतीकैशिक्यौ तत्र वृत्ती। तां ते नुनयोऽभितुष्टुवुः—

पाञ्चालनेपथ्यविधिर्नराणां स्त्रीणां पुनर्नन्दतु दाक्षिणात्यः।
यज्जल्पितं यच्चरितादिकं तदन्योन्यसंभिन्नमवन्तिदेशे॥

ततश्च स दक्षिणां दिशमाससाद यश मलयमेकलपालमञ्जराः पर्वताः। कुन्तलकेरलमहाराष्ट्रगाङ्गादयो जनपदाः। तत्राऽभियुञ्जाना तमौमेयीति

---

पाञ्चालमध्यमा—दक्षिणात्ययोर्मध्यचारिणीति उभयरूपा। अतएव=अस्माद्धेतोः सात्वतीकैशिक्यौ उभे तत्र वृत्ती भवतः। उक्तञ्च नाट्यशास्त्रेऽपि—

सात्वतीं कैशिकीञ्चैव वृत्तिमेषा समाश्रिता। ( वही श्लोक ३८ पूर्वार्ध )

तां वृत्तिं मुनयोऽभितुष्टुवुः पूर्ववत् यथा—पाञ्चालनेपथ्येति······।

अवन्तिदेशे नराणां पाञ्चालनेपथ्यविधिः स्त्रीणां दाक्षिणात्यो नेपथ्यविधिः पुनः यद् अन्योन्यसंभिन्नं जल्पितं यच्च चरितादिकं तद् नन्दतु इत्यन्वयः।

अवन्तिदेशे पाञ्चालमध्यमदक्षिणयोः परस्परमिश्रितानि यानि वेषजल्पितचरितादीनि तानि नन्दन्तु इति भावः! प्रत्यक्षरमर्थः स्पष्टः।

ततः=तस्या दिशः, स; काव्यपुरुषः दक्षिणां दिशमुच्चचाल यत्र मलयमकलकपालमञ्जराः पर्वताः कुन्तलकेरलमहाराष्ट्रगाङ्गादयो जनपदाः। यथोक्तम् नाट्याशस्त्रे—

महेन्द्रो मलयः सह्यो मेकलः कालपञ्जरः।
एतेषु ये श्रिता देशा सज्ञेयो दक्षिणापथः॥

---

प्रवृत्ति पाञ्चालमध्यमा एवं दाक्षिणात्य, प्रवृत्ति के मध्यचारिणी है। इसलिये उसमें सात्वती एवं कशिकी दोनों वृत्ति होती है उसकी भी मुनियों ने पूर्ववत् स्तुति की।

अवन्ति देश में पुरुषों का पाञ्चाल वेष विन्यास एवं स्त्रियों का दाक्षिणात्य वेषविन्यास, तथा दोनों ही देशों को परस्पर मिले हुए भाषण एवं चरितादि प्रशंसनीय हैं।

इसके बाद वह काव्यपुरुष दक्षिण दिशा की ओर चला। जहाँ मलय मेकल कुन्तल, केरल, पालमञ्जर महाराष्ट्र, वङ्ग एवं कलिङ्ग आदि जनपद हैं। वहाँ भी

समानं पूर्वेण । सा दाणियात्या प्रवृत्तिः । तां ते मुनयोऽभितुष्टुवुः—

आमूलतो वलितकुन्तलचारुचूडश्चूर्णालकप्रचयलाञ्छितभालभागः ।
कक्षानिवेशनिबिडीकृतनीविरेष वेषश्चिरं जयति केरलकामिनीनाम् ॥

तामनुरक्तमनाः स यन्नेपथ्यः सारस्वतेय आसीदिति समानं पूर्वेण ।

---

कोशलास्तोशलाश्चैव कलिङ्गा यावनाः खसाः ।
द्रविडान्ध्रमहाराष्ट्रा वैष्णा वै वानवासिजाः ।
दक्षिणस्य समुद्रस्य तथा बिन्ध्यस्य चान्तरे ।
ये देशास्तेषु युञ्जीत दाक्षिणात्यां तु नित्यशः ॥ वही श० ३३–३५

तत्राभियुञ्जाना सा यं वेषमसेविष्ट । सा वेषात्मिका प्रवृत्तिः दाक्षिणात्या । तां प्रवृत्तिं ते मुनयोऽभितुष्टुवुः । आमूलतो इतिः ।

केरलकामिनीनां आमूलतोवलितकुन्तलचारुचूडः चूर्णा ......भाग, कक्षा ... नीविः वेषश्चिरं चकास्तु इत्यन्वयः । आमूलतः = अग्रभागादामूलतः वलितकुन्तलचारुचूडः = वलितानां कुन्तलानां केशानां चारुः=मनोहरा चूडा=केशपाशो यस्मिन् सः वेषः, चूर्णालकप्रचयलाञ्छित, भालभागः = चूर्णालकानां यः प्रचयः = गुच्छकः तेन लाञ्छितः = चिह्नितः, शोभितो, वा भालभागः = ललाटभागः यस्मिन् सः, सभ्रमरक इत्यर्थ । अलकाश्चूर्णकुन्तलाः । ते ललाटे भ्रमरकाः इत्यमरः । कक्षानिवेशनिबिडीकृतनीविः = कक्षानिवेशेन = अञ्चलस्य कक्षाप्रान्तसंयमनेन, निवीडीकृतादृढं बद्धा, नीविः = लटीवस्त्रग्रन्थिः यस्मिन् सः "स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च इत्यमरः । वेषः केरलकामिनां चिरं चकास्तु = शोभताम् ।

तामनुरक्तमनाः स काव्यपुरुषः सारस्वतेयः यन्नेपथ्यः यादृग्वेष आसीत्

---

उसमें आसक्त वह औमेयी जो वेष धारण की उसे दाक्षिणात्य प्रवृत्ति कहते हैं । उसकी भी मुनियों ने स्तुति की—

केरल कामिनियों का वेष चिरकाल तक सर्वोत्कृष्ट हो रहा है । जिसमें मनोहर केशों की जूड़ा है जो अग्रभाग से मूलपर्यन्त मोड़ कर बनायी गयी है । तथा कुटिल चूर्णकेश भालभाग पर लटक रहे हैं अर्थात् भ्रमरक है । तथा कक्षा लगाने से वस्त्र ग्रन्थि (निविड) कस कर बँधी है ।

औमेयी वधू में आसक्त सारस्वतेय ने जिस वेष को धारण किया वहाँ के

**सापि यद्विचित्रनृत्तगीतवाद्यविलासादिकमाविर्भावयामास सा कैशिकी-वृत्तिस्तां ते मुनय इति समानं पूर्वेण। यदत्यर्थं च स तया वशंवदीकृतः स्थानानुप्रासवदसमासं योगवृत्तिगर्भं च जगाद सा वैदर्भी रीतिः। तां ते मुनय इति समानं पूर्वेण। तत्र वेषविन्यासक्रमः प्रवृत्तिः, विलासविन्यास-**

---

तद्वेषाश्च तत्रत्याः पुरुषा बभूवुः। सोऽपि सैव प्रवृत्तिः। सापि = औमेऽप्यपि तत् विचित्रनृत्तगीतवाद्यविलासादिकत्त आविर्भावयामास सा कैशिकी वृत्तिः। उक्तञ्च नाट्यशास्त्रे त्रयोदशाध्याये—

तत्र दाक्षिणत्यास्तावत् वहुगीतनृत्यवाद्या कैशिकीप्रायाश्चतुरमधुरललिताङ्गा-भिनेयाश्च इति।

तामपि कैशिकीं मुनयः पूर्ववदभितुष्टुवुः। तया = वध्वा अत्यर्थं = अत्यन्तं वशंवदीकृतः = स्वायत्तीकृतः स काव्यपुरुषः, स्थानानुप्रासवत् = समुचितस्थानो पात्तानुप्रासालङ्कारयुक्तं, असमासं = समासरहितं योगवृत्तिगर्भं = योगवृत्तिः = अधीनीकृतव्यञ्जनाभिधावृत्तिः, तया गर्भं = तद्युक्तं, यद् जगाद = गदितवान् सा वैदर्भीरीतिः। तां ते मुनयः पूर्ववदभितुष्टुवुः॥

प्रवृत्तेर्लक्षणं दर्शयन्नाह तत्र, वेषविन्सक्रमः = नेपथ्योपस्थापनक्रमः, प्रवृत्तिः। वृत्तिं लक्षयति—विलासविन्यासक्रमः = नृत्यगीतादिविलासोपस्थापनक्रमो, वृत्तिः। उक्तञ्च नाट्यशास्त्रे—

अत्राह प्रवृत्तिरिति—कस्मात्, उच्यते—नानादेशवेषभाषाचारवार्ताः ख्यापयतीति प्रवृत्तिः। वृत्तिसंश्रितेष्वमीषु प्रयोगेषु अभिरता देशा यतः प्रवृत्तिचतुष्टय मभिनिवृत्तं प्रयोगश्चोत्पादितः इति। रीतिं लक्षयति—वचनाविन्यासक्रमः—

---

लोगों ने उसका अनुसरण किया इत्यादि पूर्ववत् समझे। वह वधू भी जिस विचित्र नृत्त गीत, वाद्य, विलास आदि को प्रगट की उसे कैशिकी वृत्ति कहते हैं। उसकी भी स्तुति पूर्ववत् समझे। उस वधू में आसक्त काव्यपुरुष ने उचित अनु-प्रास समासहीन एवं योगवृत्तिगर्भ, ( योग वृत्ति से आभिधामूला व्यञ्जना की ओर संकेत है ) जो कुछ कहा उसे वैदर्भी वृत्ति कहते हैं। उसकी भी मुनियों ने पूर्ववत् स्तुति की।

उसमें वेष विन्यास क्रम को प्रवृत्ति कहते है विलास विन्यासक्रम को वृत्ति

क्रमो वृत्तिः, वचनविन्यासक्रमो रीतिः। "चतुष्टयी गतिर्वृत्तीनां प्रवृत्तीनां च देशानां पुनरानन्त्यं तत्कथमिव कार्त्स्न्येन परिग्रहः" इत्याचार्याः। अनन्तानपि हि देशांश्चतुर्धैवाकल्प्य कल्पयन्ति। "चक्रवर्तिक्षेत्रं सामान्येन तदवान्तरविशेषैः पुनरनन्ता एव" इति यायावरीयः। दक्षिणात्समुद्रादुदीचीं

---

पदोपस्थापनसाधनम् समासक्रमो वा रीतिः।

देशानामानन्त्यात्कथं चतसृभिरेव प्रवृत्तिभिस्तेषां परिग्रह इत्याचार्याणां शङ्कां, भारत्यादिचतुर्वृत्त्यभिरतानां देशानां चतुर्विधत्वपरिकल्पनेन समाधानञ्च निर्दिशति—चतुष्टयीति। वृत्तीनां प्रवृत्तीनाञ्च चतुष्टयी गतिः, देशानां पुनः आनन्त्यं तत्कथमिव कार्त्स्न्येन=अखिलत्वेन परिग्रहः इत्याचार्याणां शङ्का। समाधानं तु अनन्तानपि=असंख्याकानपि देशान् चतुर्धैवाकल्प्य=भारत्यादिचतुर्वृत्त्यभिमतत्वेन देशानामपि चतुर्विधत्वमिति परिकल्प्य कल्पयन्ति=परिग्रहं कुर्वन्ति। उक्तञ्च—

अत्राह—यथा पृथिव्यां नानादेशाः सन्ति कथमासां चतुर्विधत्वमुपपन्नम्? समानलक्षणश्चासां प्रयोग उच्यते। सत्यमेतत् समानलक्षणः प्रयोगः। किन्तु नानादेशवेषभाषाचारो लोक इति कृत्वा लोकानुमतेऽनुवृत्तिसंश्रितमस्य मया चतुर्विधत्वमभिहितम्। भारत्यारभटी सात्वती कैशिकीति च। वृत्तिसंश्रितेष्वमीष्वभिरता देशाः, यतः प्रवृत्तिचतुष्टयमभिनिवृत्तं प्रयोगश्चोत्पादितः इति। ( वही ना० शा० अ० १३ )

यायावरीयस्तु विसंवदते। अनुवृत्तिसंश्रितत्वेन देशानां चतुर्विधत्वकल्पनापेक्षया एवं चतुर्विधत्वं कल्पनीयम्। यथा सामान्येन, एकस्या एव दिशोऽवान्तरसामान्यापेक्षया चतुर्धात्वं दशधात्वं वा परिकल्पनं पुनश्च किञ्चिद्वस्तुदेशाद्यपेक्षया तासामनन्तत्वं तथैव सामान्येनैकस्य चक्रवर्तिक्षेत्रस्यावान्तरसामान्यकल्पनया चतुर्विधत्वं पुनश्च तदवान्तरविशेषक्षेत्रत्वेनानन्तत्वं भवति। इति।

---

कहते हैं तथा वचन विन्यास क्रम को रीति कहते है। अब प्रश्न उठता है कि वृत्तियाँ एवं प्रवृत्तियाँ चार होती हैं तथा देश अनन्त है तो इनसे सभी देशों का ग्रहण कैसे किया जा सकेगा? इसका उत्तर अचार्यो ने नानादेश, वेष, भाषा, आचार आदि चार के आधार पर अनन्त देशों को चार भागों में रखकर चारों वृत्तियों एवं प्रवृत्तियों से ग्रहण की कल्पना की है। किन्तु यायावर अनन्त को एक ही मानते, हैं तथा एक को कई भागों में बाँटने की बात कहते हैं उनका

दिशं प्रति योजनसहस्रं चक्रवर्तिक्षेत्रं, तत्रैष नेपथ्यविधिः। ततः परं दिव्याद्या अपि यं देशमधिवसेयुस्तद्देश्यं वेषमाश्रयन्तो निबन्धनीयाः। स्वभूमौ तु कामचारः। द्वीपान्तरभवानां तदनुसारेण वृत्तिप्रवृत्ती। रीतयस्तु तिस्रस्तास्तु पुरस्तात्। तत्रास्ति मनोजन्मनो देवस्य क्रीडावासो विदर्भेषु वत्सगुल्मं नाम नगरम्। तत्र सारस्वतेयस्तामौमेयीं गन्धर्वव-

---

किन्नाम चक्रवर्तिक्षेत्रत्वम्। निखिलानि द्वीपानि वा कतिचन ? शङ्कां निवारयितुमाह—दक्षिणादिति। दक्षिणात् समुद्राद्, उदीचीं = उत्तरां दिशं प्रति योजन सहस्त्रं क्षेत्रं चक्रवर्तिक्षेत्रम्। तत्रइति = योजनसहस्त्रात्मक्षेत्रेष्वेव एषः = निर्दिष्टश्चतुर्विधः नेपथ्यविधिः = नेपथ्यक्रमः। ततः = तस्मात्, परं दिव्याद्या अपि = देवयोनिविशेषा अपि, यं देशं अधिवसेयुः = निवसेयुः, तेऽपि, तद्देश्यं = तत्तद्देश सम्बन्धिनं वेषं = आकल्पं आश्रयन्तः = धारयन्तः, निबन्धनीयाः = दर्शनीयाः। स्वभूमौ = स्वनिवासस्थाने, देवविशेषाणां स्वस्वनिवासस्थायिनां वेषादिकल्पने कामचारः = स्वेच्छाचारः। कुबेरादीनां स्वलोकस्थानां चतुर्विधान्यतरवेषकल्पनायां नास्ति दोष इति भावः। द्वीपान्तरभवानां = चक्रवर्तिक्षेत्रातिरिक्तद्वीपान्तर भवानां तदनुसारेण = तत्तदानुकूल्येन वृत्तिप्रवृत्ती = विलासक्रमौ निबन्धनीये।

रीतयस्तु तिस्रःगौडीयादयः, पुरस्ताद् अग्रे निरूपयिष्यन्ते। तत्र = दक्षिणस्यां, विदर्भेषु—मनोजन्मनो देवस्य = मनोजस्य देवस्य, क्रीडावासः = क्रीडास्थानं वत्सगुल्मं = एतदाख्यं नाम नगरम्। तत्र = वत्सगुल्मे नगरे, सारस्वतेयः = काव्यपुरुषः तमौमेयीम् = तां साहित्यविद्यां वधूं, गन्धर्ववत् = गन्धर्वविधिना, परि-

---

कहना है कि सामान्यतः चक्रवर्तिक्षेत्र एक है तथा उसके अवान्तर भेद अनन्त हैं। चक्रवर्तिक्षेत्र, दक्षिण समुद्र से उत्तर दिशा तक हजार योजन माना गया है। वहीं ये प्रवृत्तियाँ होती हैं। दिव्य इन्द्रादि भी जिस देश में निवास करें उसी देश की वेषभूषा का आश्रयण करते हुए उन्हें दिखलाना चाहिए ! यदि वे अपने दिव्यलोक में हो तो स्वेच्छया उनके किसी भी वेष का निरूपण करें। द्वीपान्तर के लोगों के अनुसार ही उनकी वृत्तियों एवं प्रवृत्तियों का वर्णन करें।

रीतियाँ तीन प्रकार की होती है। जिसका वर्णन आगे करेंगे। वत्स देश में भगवान कामदेव की क्रीडा भूमि गुल्म नाम का नगर है। वहाँ वह काव्यपुरुष सारस्वतेय, साहित्य वधू औमेयी से गन्धर्व विवाह किया। वहाँ से वे

त्परिणिनाय। ततस्तद्वधूवरं विनिवृत्य तेषु प्रदेशेषु विहरमाणं तुषारगिरिमेवाजगाम, यत्र गौरी सरस्वती च मिथः सम्बन्धिन्यौ तस्थतुः। तौ च कृतवन्दनौ दम्पती दत्त्वाशिषं प्रभावमयेन वपुषा कविमानसनिवासिनौ चक्रतुः। तयोश्च तं सर्गं कविभ्यः स्वर्गलोकमकल्पतां, यत्र काव्यमयेन शरीरेण मर्त्यमधिवसन्तो दिव्येन देहेन कवय आकल्पं मोदन्ते।

इत्येष काव्यपुरुषः पुरा सृष्टः स्वयम्भुवा।
एवं विभज्य जानानः प्रेत्य चेह च नन्दति॥

---

णिनाय = उदवहत। ततः = तदन्तरं तद्वधूवरं एकवद्भावः, तेषु प्रदेशेषु विहरमाणं = विहारं कुर्वत् विनिवृत्य = परावृत्य तुषारगिरिं = हिमालयम् एवाजगाम। यत्र = तुषारगिरौ, गौरी, सरस्वती मिथः सम्बन्धिन्यौ तस्थतुः। ते = सम्बन्धियौ कृतवन्दनौ=विहितप्रणामौ तां दम्पतीं आशिषं दत्त्वा प्रभावमयेन वपुषा = अमूर्तेन शक्तिमूर्त्या वा कविमानसनिवासिनौ = कविमानसवासिनौ चक्रतुः। तयोश्च = सरस्वतीपार्वत्योश्च तं सर्गं=काव्यपुरुषसाहित्यविद्यारूपं सर्गं=सृष्टिं कविभ्यः, स्वर्गलोकं अकल्पताम्। ते सरस्वत्युमे अरचयतां। "द्युद्भ्यो लुङि" इति क्रृपू धातोः परस्मैपदित्वम्। यत्र स्वर्गे स्वर्गलोके काव्यमयेन = काव्यत्वरूपेण, मर्त्यं = मर्त्यलोकं अधिवसन्तः, कवयः काव्यमयेन=दिव्येन, देहेन आकल्पं = कल्पपर्यन्तं मोदन्ते।

अध्यायमुपसंहरति - इत्येष स्वयम्भुवा = ब्रह्मणा पुरा = पूर्वं इत्येष = एवं विधः काव्यपुरुषः सृष्टः = रचितः। एवं = इत्थंप्रकारेण, एवं विभज्य जानानः = ज्ञाता प्रेत्य = परलोकंगत्वा इहच = अत्रलोके च, उभयत्र नन्दति = प्रसीदति इति।

---

वधूवर उन-उन प्रदेशों में विहार करते हुए तुषारगिरि पर ही फिर लौट आये। जहाँ सरस्वती एवं गौरी सम्बन्धिनियाँ रहती थी। दोनों ने उन दोनों को प्रणाम किया। दम्पती को आशीर्वाद देकर उन्हें, अमूर्त प्रभावमय शरीर से कवियों के मानस का निवासी बना दीं। उन दोनों सरस्वती एवं उमा ने काव्यपुरुष एवं साहित्यविद्या की सृष्टि कर इस जगत के लिए साक्षात् स्वर्गलोक ही बना दिया जहाँ ( काव्य एवं साहित्यविद्या में ) तत्पर कवि काव्यमय शरीर से मृत्युलोक में रहते हुए दिव्य देह से कल्पपर्यन्त आनन्दित रहते हैं।

इस प्रकार स्वयम्भू ब्रह्मा ने पूर्वकाल में काव्यपुरुष की सृष्टि की। इसे विभाग पूर्वक जानने वाला व्यक्ति यहाँ तथा परलोक में भी आनन्दित रहता है।

# चतुर्थोऽध्यायः

## पदवाक्यविवेकः

द्विविधं शिष्यमाचक्षते यदुत बुद्धिमानाहार्यबुद्धिश्च। यस्य निसर्गतः शास्त्रमनुधावति बुद्धिः स बुद्धिमान्। यस्य च शास्त्राभ्यासः संस्कुरुते बुद्धिमसावाहार्यबुद्धिः। त्रिधा च सा, स्मृतिर्मतिः प्रज्ञेति। अतिक्रान्तस्यार्थस्य स्मर्त्री स्मृतिः। वर्त्तमानस्य मन्त्री मतिः। अनागतस्य प्रज्ञात्री प्रज्ञेति। सा त्रिप्रकाराऽपि कवीनामुपकर्त्री। तयोर्बुद्धिमान् शुश्रूषते

---

अथ शिष्यभेद प्रदर्शयन्नाह—द्विविधमिति, शिष्यो द्विविधः। बुद्धिमान् आहार्यबुद्धिश्चेत्यर्थः। तत्र बुद्धिमन्तं निर्दिशति आहार्यबुद्धिश्च यस्य = शिष्यस्य, बुद्धिर निसर्गतः = स्वभावतः शास्त्रम् अनुधावति = शास्त्रमनुध्यायति, स बुद्धिमान् शिष्यः। यस्य, बुद्धि शास्त्राभ्यासः = शास्त्रपरिशीलनं, संस्कुरुते = तीव्रयति, असौ, आहार्यबुद्धिः। बुद्धिरस्ति अस्येति बुद्धिमान्, आहार्याबुद्धिर्यस्य स आहार्यबुद्धिरित्युभयत्र स्थिताया बुद्धेर्भेदं दर्शयति—सा बुद्धिः, त्रिधा = त्रिप्रकारिका। (१) स्मृतिः, (२) मतिः, (३) प्रज्ञा इति। तत्र अतिक्रान्तस्य = अतीतस्य, अर्थस्य = पदार्थस्य, स्मर्त्री=स्मरणकर्त्री स्मृतिर्भवति। वर्तमानस्य = प्रवर्तमानस्य, मन्त्री = मननकर्त्री, मतिः। अनागतस्य = भविष्यतो पदार्थस्य, प्रज्ञात्री = प्रज्ञानात्मिका प्रज्ञेति। त्रिप्रकारापि = त्रिविधापि सा, बुद्धिः कवीनां = कवयितॄणां उपकर्त्री = उपकारिणी। प्रतिभोपारूढानामतीतानागतवर्तमानपदार्थानां काव्ये वर्ण्यविषयत्वात्।

---

विद्वानों ने दो प्रकार का शिष्य कहा है—(१) बुद्धिमान् तथा आहार्यबुद्धि। जिसकी बुद्धि स्वभावतः शास्त्रों के तत्त्वों की ओर उन्मुख रहती है उसे बुद्धिमान् कहते हैं। आहार्यबुद्धि वह होता है जिसकी बुद्धि शास्त्राभ्यास एवं गुरूपदेश से पहले परिष्कृत होती है फिर शास्त्र-तत्त्व की ओर उन्मुख होती है। बुद्धि तीन प्रकार की होती है—(१) स्मृति (२) मति एवं (३) प्रज्ञा। अतीत, बीते हुए अर्थों का स्मरण रखने वाली बुद्धि स्मृति कही जाती है। वर्तमान विषयों का मनन करने वाली बुद्धि मति कही जाती है तथा भविष्यद् अर्थ की ज्ञाता बुद्धि का नाम प्रज्ञा है। तीनों प्रकार की ये बुद्धियाँ कवियों का उपकार करती हैं।

शृणोति गृह्णीते धारयति विजानात्यूहतेऽपोहति तत्त्वं चाभिनिविशते। आहार्यबुद्धेरप्येत एव गुणाः, किन्तु प्रशास्तारमपेक्षन्ते। अहरहः सुगुरूपासना तयोः प्रकृष्टो गुणः। सा हि बुद्धिविकाशकामधेनुः। तदाहुः—

प्रथयति पुरः प्रज्ञाज्योतिर्यथार्थपरिग्रहे
तदनु जनयत्यूहापोहक्रियाविशदं मनः।

---

तयोः=बुद्धिमदाहार्यबुद्ध्योः शिष्ययोः, बुद्धिमान् शिष्यः, शुश्रूषते=श्रोतुमिच्छति, गुरोः सकाशादित्यर्थः। शृणोति=अवधानेनाकर्णयति, धारयति=श्रुतमर्थं चित्ते निवेशयति, विजानाति=पुनः पुनः पर्यालोचयति, ऊहते=तत्सदृशमन्यमपि पदार्थं तर्कयति, अपोहति=स्थूलांशान् निर्गततत्वान् त्यजति, तत्त्वं च अभिनिविशते, इत्थञ्च शुश्रूषया, श्रुत्वा, गृहीत्वा, धारयित्वा, पर्यालोच्य, अभ्यूह्य, अपोह्य तत्वेषु चित्तं निवेशयति। इति भावः।

आहार्यबुद्धेरपि, एत एव गुणाः, किन्तु प्रशास्तारं=उपदेष्टारं, अपेक्षन्ते=तं विना न प्रादुर्भवन्ति। तत्र अहरहः=प्रतिदिनं सुगुरूपासना=सुगुरु सामीप्यसेवना, तयोर द्वयोः शिष्ययोः प्रकृष्टो गुणः=प्रकर्षापादको गुणः। सा हि=गुरुपासना हि, बुद्धिविकासकामधेनुः=बुद्धिविकासाय स्मृतिमतिप्रज्ञोन्मेषाय कामधेनुः=कामगवी। सद्गुरूपसनयैव द्विविधायाबुद्धेर्विकास इत्यर्थः, तदाहुः=तदेव वदन्ति—

विद्यावृद्धैः सहपरिचयः, पुरःयथार्थपरिग्रहे प्रज्ञाज्योतिः प्रथयति तदनु

---

उन दोनों प्रकार के शिष्यों में बुद्धिमान् शिष्य, सुनने की इच्छा करता है, सुनता है, समझता है, हृदय में धारण करता है, पुनः पुनः मनन करता है, तर्क-वितर्क करता है, स्थूलांश का त्याग करता है, तथा तत्त्व का बोध करता है। इस प्रकार वह शुश्रूषा, श्रवण, ग्रहण, धारण, पर्यालोचन, तर्क-वितर्क, तथा स्थूलांशत्याग, पूर्वकतत्त्व ( में प्रवेश करता है ) का बोध करता है।

आहार्यबुद्धि शिष्य के भी ये ही गुण होते हैं परन्तु ये विना गुरूपदेश के नहीं होते। ये गुरूपदेश की अपेक्षा करते हैं। निरन्तर योग्य गुरु की उपासना दोनों शिष्यों के उत्तमोत्तम गुण हैं। क्योंकि तीनों प्रकार की बुद्धि के विकास के लिए गुरूपासना कामधेनु के समान है। कहा भी गया है कि विद्यावृद्ध गुरुओं

अभिनिविशते तस्मात्तत्त्वं तदेकमुखोदयं
सह परिचयो विद्यावृद्धैः क्रमादमृतायते ॥

ताभ्यामन्यथाबुद्धिर्दुर्बुद्धिः । तत्रबुद्धिमतः प्रतिपत्तिः स खलु सकृदभिधानप्रतिपन्नार्थः कविमार्गं मृगयितुं गुरुकुलमुपासीत । आहार्यबुद्धेस्तु

---

ऊहापोहक्रियाविशदं मनः जनयति तस्मात् तदेकमुखोदयं तत्त्वं अभिनिविशते, ( एवं ) क्रमादमृतायते इत्यन्वयः । विद्यावृद्धैः = विद्यामर्मज्ञैः विद्वद्भिः सह परिचयः = सङ्गः सहवासः, पुरः = प्रथमं, यथार्थपरिग्रहे = वास्तवार्थज्ञाने, प्रज्ञाज्योतिः = बुद्धयात्मकं तेजः, प्रथयति = प्रकटयति तदनु = तदनन्तरं, बुद्धयात्मकज्योतिषा जायमानयोहापोहक्रियया, ग्रहाग्रहतर्कक्रियया विशदं = विशुद्धं सत्त्वं, मनः जनयति । तस्मात् = ततः तदेकमुखोदयम् — तदेकमुखेन = सात्विकमनऐकाग्र्येण उदयः, बोधो यस्य तत् व्यधिकरणबहुव्रीहिः, तत्त्वं वस्तुयाथार्थ्यं अभिनिविशते = अभिनिपूर्वकस्य विशधातोर्ज्ञानार्थकत्वम् । अभिजानाति । एवञ्च क्रमात् क्रमेण अमृतायते = अमृतवदुपकारको भवति । अमृतमिवाचरति । धन्यो विद्यावृद्धपरिचयः । इति ।

ताभ्यां = बुद्धिमदाहार्यबुद्धिभ्यां, अन्यथाबुद्धिः = विपरीतबुद्धिः, दुर्बुद्धिः शिष्यो भवति । तत्र = तेषु, बुद्धिमतः = बुद्धिमत्शिष्यस्य प्रतिपत्तिः = प्रतिबोधः, प्रतिग्रहणम् । स = बुद्धिमान् खलु, सकृदभिधानप्रतिपन्नार्थः = सकृदभिधानप्रतिगृहीतार्थः, कविमार्गं = कविसरणीं, मृगयितुं = अन्वेष्टुं गुरुकुलं सेवेत ।

---

का सहवास क्रमशः अमृत के समान होता है क्योंकि वह पहले यथार्थपरिग्रह के लिए प्रज्ञा ज्योति का प्रणयन करता है इसके बाद मन को तर्क वितर्क की क्रियाओं से विशद ( निर्मल ) बना देता है विशद मन के एक मुख, एकाग्र होने पर ( उससे ही प्राप्त होने वाले ) तत्व का साक्षात्कार होने लगता है । अथवा वह मन एक निश्चित सिद्धान्त या तत्वज्ञान को प्राप्त करता है ।

उन दोनों बुद्धिमान् या आहार्यबुद्धि से भिन्न विपरीत बुद्धि वाला शिष्य दुर्बुद्धि कहा जाता है । इन शिष्यों में बुद्धिमान् शिष्य को स्वभावतः ग्रहण शक्ति,

द्वयमप्रतिपत्तिः सन्देहश्च । स खल्वप्रतिपन्नमर्थं प्रतिपत्तुं सन्देहं च निराकर्तुमाचार्यानुपतिष्ठते । दुर्बुद्धेस्तु सर्वत्र मतिविपर्यास एव । स हि नीलीमेचकितसिचयकल्पोऽनाधेयगुणान्तरत्वात्तं यदि सारस्वतोऽनुभावः प्रसादयति तमौपनिषदिके वक्ष्यामः ।

---

आहार्यबुद्धेस्तु, अप्रतिपत्तिः = अर्थाग्रहः, सन्देहश्च द्वयं भवति । अतः स अप्रतिपन्नमर्थं = अज्ञातमर्थं प्रतिपत्तुं = ज्ञातुं संदेहं = संशीतिं च निराकर्तुं = दूरयितुं आचार्यान् = व्याख्यातॄन् उपतिष्ठते ।

दुर्बुद्धेस्तु सर्वत्र = सर्वेषु लौकिकेषु शास्त्रीयेषु विषयेषु, मतिविपर्यासः = बुद्धिवैपरीत्यमेव भवति । स हि = दुर्बुद्धिर्हि, नीलीमेचकितसिचयकल्पः = अभङ्गुरवर्णकर्बुरितवस्त्रसदृशः, अनाधेयगुणान्तरत्वात् = गुणान्तराणां तद्भिन्नगुणानां वा आधातुमसमर्थत्वात् । तं = दुर्बुद्धिं शिष्यं सारस्वतोऽनुभावः = सरस्वतीमन्त्रसिद्धपुरुषाराधनादिजन्योऽनुभावः, प्रसादयति निर्मलीकरोति यदि = चेत् सम्भावनायां, नास्ति दिव्यानुभावातिरिक्तः कश्चनान्योऽनुभाव इति भावः । तं औपानिषदिके = तदधिकरणे वक्ष्यामः = कथयिष्यामः ।

---

( प्रतिपत्ति ) होती है । बुद्धिमान् शिष्य एकबार संकेतमात्र से पदार्थों का बोध कर लेता है । अतः ऐसे सकृत् बोधन मात्र से अर्थों का बोध कर लेने वाले शिष्य को चाहिए कि वह कविमार्ग की प्राप्ति के लिए गुरुकुल की सेवा करें ।

आहार्यबुद्धि को अर्थाग्रह अर्थग्रहण करने की अशक्ति एवं संदेह दोनों होते हैं । उसे चाहिए कि जिन पदार्थों को वह भलीभाँति नहीं समझ पाया है उसे समझने के लिए तथा अपने संदेहों के निराकरण के लिए आचार्यों की सेवा करें ।

दुर्बुद्धि को सर्वत्र ( बुद्धिवैपरीत्य ) बुद्धिविभ्रम होता है । तथा उस बुद्धि विभ्रम से पक्के स्थिर रंग से रंगे हुए काले वस्त्र के ऊपर जैसे दूसरा कोई रंग नहीं चढ़ाया जा सकता वैसे ही भ्रान्त चित्त दुर्बुद्धि के ऊपर किसी दूसरे गुणों का आधान नहीं हो पाता । हाँ कदाचित् सरस्वती सम्बन्धी मन्त्रतन्त्रादि अनुभाव, उसे, प्रसादयुक्त निर्मल मति, कर सके । जिन्हें हम औपनिषदिक अधिकरण में कहेंगे ।

"काव्यकर्मणि कवेः समाधिः परं व्याप्रियते" इति श्यामदेवः। मनस एकाग्रता समाधिः। समाहितं चित्तमर्थान्पश्यति। उक्तञ्च—

सारस्वतं किमपि तत्सुमहारहस्यं
यद्गोचरं च विदुषां निपुणैकसेव्यम्।
तत्सिद्धये परमयं परमोऽभ्युपायो
यच्चेतसो विदितवेद्यविधेः समाधिः॥

---

काव्यनिर्माणे काव्यहेतुं विचारयन्नाह—काव्यकर्मणि = काव्यकर्तव्यतायां कवेः समाधिः = मनस एकाग्रता, परं व्याप्रियते = मुख्यतया व्यापृतो हेतुर्भवति। समाधिस्तु मनस एकाग्रता। समाहितं = एकाग्रीभूतं विषयान्तरप्रवेशशून्यं, चित्तं = मनः अर्थान् = ज्ञातव्यार्थान् काव्यानुकूलपदार्थान् वा पश्यति। उक्तञ्च—

निपुणैकसेव्यं विदुषां च यद् गोचरं तत् सारस्वतं सुमहारहस्यं किमपि। तत् सिद्धये अयं परमो अभ्युपायः यत् विदितवेद्यविधेः चेतसः समाधिः, इत्यन्वयः। निपुणैकसेव्यं = एकञ्चासौ सेव्यमेकसेव्यं निपुणैरेकसेव्यं निपुणैकसेव्यं, अथवा एकपदं प्रधानपरं तस्मान्नास्ति पूर्वनिपातस्यावसरः, अतः निपुणेषु यः प्रधानस्तेन सेव्यम् निपुणैकसेव्यम्, विदुषां = विदाम् यद् गोचरं = गम्यं तत्, = यदर्थपरामर्शकं सारस्वतं = सरस्वतीसम्बन्धि सुमहारहस्यम् = अत्यन्तं रहस्यात्मकं, परैरवेद्यम् किमपि = विलक्षणं वागगोचरं तत्वमस्ति। तत्सिद्धये = तद्रहस्यावगतये अयं परमः = उत्कृष्टः अभ्युपायः = साधनम् यत् विदितवेद्यविधेः = अवगतावगन्तव्यप्रकारस्य चेतसः = मनसः समाधिः = एकाग्रता।

---

श्यामदेव का मत है कि कविता में कवि की समाधि ही मुख्य रूप से प्रवर्तित होती है समाधि का अर्थ है मन की एकाग्रता। एकाग्र ही चित्त काव्यानुकूल ज्ञातव्य अर्थों को देख पाता है।

जैसा कि कहा गया है—

निपुणों से ही एकमात्र सेवनीय, महान् गंभीर सारस्वत रहस्य विलक्षण ही है जिसे विद्वान् ही समझ पाते हैं। उस परम रहस्य को समझने के लिए यही एक परम उत्कृष्ट उपाय है चित्त की एकाग्रता। जो चित्त किसी भी वेदितव्य विषयों के समुचित मार्ग ( प्रत्यक्षानुमानादि मार्ग ) को समझ लिया हो।

"अभ्यासः" इति मङ्गलः। अविच्छेदेन शीलनमभ्यासः। स हि सर्वंगामी सर्वत्र निरतिशयं कौशलमाधत्ते। समाधिरान्तरः प्रयत्नो बाह्यस्त्वभ्यासः। तावुभावपि शक्तिमुद्भासयतः। "सा केवलं काव्ये हेतुः" इति यायावरीयः। विप्रसृतिश्च सा प्रतिभाव्युत्पत्तिभ्याम्। शक्तिकर्तृके हि प्रतिभाव्युत्पत्तिकर्मणी।

शक्तस्य प्रतिभाति शक्तश्च व्युत्पद्यते।

---

मङ्गलमतमाह—अभ्यासः = पुनपुनरनुशीलनं सारस्वताधिगमसाधनम् इति मङ्गलः। अभ्यासलक्षणमाह—अविच्छेदेन = नैरन्तर्येण शीलनं = मननम्, अभ्यासः। स हि = अभ्यासो हि, सर्वगामी = काव्यशास्त्रादिसर्वोपयोगी, सर्वत्र = सकलेषु विषयेषु, निरतिशयं = प्रकृष्टतमं, कौशलं = नैपुण्यं, आधत्ते = विदधाति। समाध्यभ्यासयोः साधनत्वेन समानेऽपि अन्तरमाह—समाधिः = मनसएकाग्रता, आन्तरः प्रयत्नः = काव्यं प्रति आभ्यन्तर उपायः, बहिरिन्द्रियैरसम्पाद्यत्वात्। अभ्यासः = पुनपुनः परिशीलनात्मा, बाह्यः = बहिर्भूतः, बहिरिन्द्रियाक्षिमुखादिसम्पाद्यत्वात्। तावुभावपि = समाध्यभ्यासावुभावपि शक्तिम् उद्भासयतः = उद्दीपयतः। सा = शक्तिः, केवलं काव्ये हेतुः = कारणम् इति यायावरमतम्।

सा = शक्तिः, प्रतिभाव्युत्तिभ्यां विप्रसृतिः = विप्रकृष्टा भिन्नेतिभावः। यतो हि— प्रतिभाव्युत्पत्योः शक्तिः कर्त्री भवति। शक्त्यभावे प्रतिभाव्युत्पत्यभावः, प्रतिभाव्युत्पत्तिकर्मणोः शक्त्येकाधिष्ठानत्वात्। तदेवाह—शक्तिकर्तृके इति, शक्तिः कर्त्री ययोस्ते प्रतिभाव्युत्पत्तिकर्मणी स्तः। शक्तस्य = शक्ति-

---

मङ्गल का मत है कि अभ्यास ही काव्य के प्रति प्रधान कारण है। धारावाहिक अपरिच्छिन्न रूप से किसी वस्तु के पर्यालोचन को अभ्यास कहते हैं। वह अभ्यास काव्य एवं शास्त्रादि सबके लिए उपयोगी है तथा सम्पूर्ण वाङ्मय में निपुणता पैदा करता है। समाधि मानस प्रयत्न तथा अभ्यास बहिरिन्द्रियों से सम्पाद्य होने के कारण बाह्य प्रयत्न कहा जाता है।

समाधि एवं अभ्यास दोनों ही शक्ति को उद्दीपित करते हैं। केवल शक्ति ही काव्य का कारण है ऐसा यायावरीय का मत है।

वह शक्ति प्रतिभा एवं व्युत्पत्ति से भिन्न है क्योंकि प्रतिभा एवं व्युत्पत्ति को पैदा करनेवाली शक्ति होती है तथा प्रतिभा एवं व्युत्पत्ति शक्ति के कार्य हैं।

या शब्दग्राममर्थसार्थमलङ्कारतन्त्रमुक्तिमार्गमन्यदपि तथाविधमधिहृदयं प्रतिभासयति सा प्रतिभा। अप्रतिभस्य पदार्थसार्थः परोक्ष इव, प्रतिभावतः पुनरपश्यतोऽपि प्रत्यक्ष इव। यतो मेधाविरुद्रकुमारदासादयो जात्यन्धाः कवयः श्रूयन्ते। किञ्च महाकवयोऽपि देशद्वीपान्तरकथापुरुषादिदर्शनेन तत्रत्यां व्यवहृतिं निबध्नन्ति स्म। तत्र देशान्तरव्यवहारः--

---

समवेतस्य पुरुषस्य प्रतिभाति = नवार्थप्रतिभानं भवति, शक्तिसमवेत एव व्युत्पत्तिमान् भवति। रुद्रटः काव्यालङ्कारे शक्तिलक्षणमित्थं कृतवान्—

मनसि सदा सुसमाधिनि विस्फुरणमनेकधाभिधेयस्य।
अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः॥ १-११

प्रतिभां लक्षयति—या, शब्दग्रामं = काव्यानुकूलशब्दसमुदायम्, अर्थसार्थं = तदनुकूलपदार्थसमूहं, अलङ्कारतन्त्रम् = शब्दार्थालङ्कारोभयप्रपञ्चम्, उक्तिमार्गं = शब्दार्थव्यापारचमत्कारं, तथाविधं=तादृशमेवान्यत्काव्यतत्त्वं, रसादितत्त्वं अधिहृदयं= मध्येहृदयं प्रतिभासयति = वैलक्षण्येन समुल्लासयति सा प्रतिभा। अन्वयव्यतिरेकित्वेन प्रतिभायाः प्रतिभासकत्वं दर्शयति—प्रतिभां विना प्रत्यक्षोऽपि पदार्थसार्थः परोक्षः, सत्यां प्रतिभायां परोक्षोऽपि प्रत्यक्षः। एवं च यत्र यत्र काव्यतत्त्व प्रत्यक्षत्वं तत्र तत्र प्रतिभात्वं, यत्र प्रतिभात्वाभावस्तत्र काव्यतत्वप्रत्यक्षत्वाभाव इत्यन्वयव्यतिरेकेण प्रतिभायाः काव्यतत्वप्रतिभासिकात्वं सिद्धम्। एतेदेवोक्तम् अप्रतिभस्येति। अप्रतिभस्य=नास्ति प्रतिभा यस्य तस्य पुरुषस्य, पदार्थसार्थः= प्रत्यक्षोऽपि पदार्थसमुदायः, परोक्षः = ज्ञानाविषय इव। प्रतिभावतः=सप्रतिभस्य, पुनः, अपश्यतोऽपि=इन्द्रियैरननुभवतोऽपि, प्रत्यक्ष इव। उदारहति—यतः = यस्मात् जात्यन्धः मेधाविरुद्रकुमारदासादयः कवयः श्रूयन्ते एतेन प्रतिभयैव प्रत्यक्षीकरण-

---

शक्त, अर्थात् शक्ति सम्पन्न पुरुष, को ही किसी वस्तु तत्त्व का प्रतिभान होता है तथा शक्ति सम्पन्न ही व्युत्पादन करता है।

प्रतिभा उसे कहते हैं जो शब्दसमूह अर्थसमूह अलङ्कारतन्त्र प्रतिपादनवैचित्र्य, एवं और अन्य भी काव्यीय तत्वों को हृदय में प्रतिभासित करती है। जिसे प्रतिभा नहीं है उसे प्रत्यक्ष भी पदार्थ समूह, अप्रत्यक्ष होता है तथा जिसे प्रतिभा है उसे अप्रत्यक्ष भी पदार्थ सार्थ प्रत्यक्ष सा दीख पड़ता है। क्योंकि कुछ कवि जात्यन्ध भी सुने जाते हैं जैसे मेधाविरुद्र एवं कुमारदासादि। और यह

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने,
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया।
ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसन्निधौ संयमो,
यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी॥

---

त्वमुपपन्नम्। पुनश्चदेशान्तरव्यवहारवर्णनाभिर् द्रढयति—किञ्चन=महाकवयोऽपि स्वदेशस्थिता अपि देशद्वीपान्तराणां कथादिवर्णनेन तत्रत्यं व्यवहारं ग्रथ्नन्तिस्म। तत्र=देशादिव्यवहारेषु, देशान्तरव्यवहारो यथा—

सत्कल्पवृक्षे वने अनिलेन प्राणानाम् उचिता वृत्तिः, काञ्चनपद्मरेणुकपिशे तोये पुण्याभिषेकक्रिया, रत्नशिलागृहेषु ध्यानं, विबुधस्त्रीसन्निधौ संयमश्च, यत् अन्यमुनयः तपोभिः काङ्क्षन्ति तस्मिन् अमी तपस्यन्ति इत्यन्वयः।

सत्कल्पवृक्षे=सद्यःकामप्रदकल्पवृक्षे वने=अरण्ये, अनिलेन=वायुना, वायुमात्रभक्षणेन उचिता=तपोयोग्या, प्राणानां वृत्तिः=प्राणधारणवृत्तिः, न तु कल्पलतादत्तवस्तुना। काञ्चनपद्मानां=स्वर्णकमलानां रेणुभिः=परागैः, कपिशे=कर्बुरे, तोये=जले, पुण्याभिषेकक्रिया=धर्मानुकूलत्रैकालिकनियमस्नानकार्याणि न तु भोगानुकूलानि, रत्नशिलागृहेषु=मणिशिलारचितगृहेषु, ध्यानं=समाधिः एकतानतयेश्वरचिन्तनम्, विबुधस्त्रीसंन्निधौ=देवाङ्गनानां सन्निधौ, संयमः=इन्द्रियनियमनं च तत्रत्यानां तपस्विनां भवन्ति। अन्यमुनयः=तद्भिन्नाः मरीच्याश्रमाद् अन्यत्रस्थाः मुनयः, तपोभिः=तपस्याभिः, यत्=यानि यानि वस्तूनि, अभिलषन्ति=प्राप्तव्यत्वेन लक्ष्यीकुर्वन्ति तस्मिन्=तेषुतेषु वस्तुषूपस्थितेष्वपि, अमी=एते, मुनयः=तपस्विनः, तपस्यन्ति=

---

भी प्रमाण है कि कुछ प्रतिभावान् कवि, देशान्तर, द्वीपान्तर, तथा कथापुरुषादि के अदर्शन या दर्शन मात्र से उनके व्यवहारों का निबन्धन कर देते हैं। जैसे—अभिज्ञानशाकुन्तल के सातवें अङ्क का बारहवाँ श्लोक—

जो सद्यः मनोरथों को पूर्ण करनेवाले कल्पवृक्षों के वन में वायुमात्रभक्षण से तपस्योचित जीवन व्यवहार चलाते हैं। स्वर्णकमल के पराग से रञ्जित जल में पुण्यापादक स्नानादि क्रिया करते हैं मणिशिला के भवनों में ध्यान (समाधि) एवं रम्भादि देवाङ्गनाओं के समीप इन्द्रिय निग्रह को धारण करते हैं तथा इस

द्वीपान्तरव्यवहारः—

अनेन सार्द्धं विहराम्बुराशेस्तीरेषु ताडीवनमर्मरेषु ।
द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः ॥
हरोऽपि तावत्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।

---

तपस्यां कुर्वन्ति । एवं मर्त्यलोकस्थेनापि कविना कालिदासेन स्वर्गव्यवहारः स्वप्रतिभयोल्लेखितः ।

द्वीपान्तरव्यवहारो यथा—द्वीपान्तरानीतलवङ्गपुष्पैर्मरुद्भिः, अपाकृतस्वेदलवा अनेन सार्द्धं अम्बुराशेस्तीरेषु तालीवनमर्मरेषु विहर । इत्यन्वयः । द्वीपान्तरेभ्यः=अन्यान्तरीपेभ्यः, आनीतानि=समाहृतानि, लवङ्गपुष्पाणि="लवङ्गं देवकुसुमम्", इत्यमरः, देवपुष्पसौरभकुलानि यैस्तैः, मरुद्भिः=पवनैः, अपाकृतस्वेदलवा=अपाकृतः, दूरीकृतः स्वेदलवः=विहारजन्यस्वेदकणः यस्याः सा तादृशी त्वं, अनेन=राज्ञा सह, अम्बुराशेः=समुद्रस्य, तालीवनमर्मरेषु=तालीवनेन जायमानमर्मरध्वनिषु, "अथ मर्मरः, स्वनिते वस्त्रवर्णानाम्", इत्यमरः । तीरेषु=तटेषु, विहर=विहारं कुरु। इयं सुनन्दाया इन्दुमतीं प्रत्युक्ती रघुवंशे ।

कथापुरुषव्यवहारो यथा—चन्द्रोदयारम्भे, अम्बुराशिः इव परिवृत्तधैर्यः हरः अपि तावत् बिम्बफलाधरोष्ठे उमामुखे विलोचनानि व्यापारयामासे-

---

मरीच आश्रम से अतिरिक्त आश्रम के तपस्वीगण अपनी तपस्याओं से जिसे प्राप्त करने की कामना करते हैं उसी में रहकर ये (मरीचाश्रमस्थ तास्वीगण) तपस्या कर रहे हैं ।

द्वीपान्तर व्यवहार निबन्धन का उदाहरण जैसे रघुवंश के छठवें सर्ग का यह पद्य—

राजाओं का परिचय कराती हुई सुनन्दा, इन्दुमती से दक्षिण देश के राजा के संदर्भ में कहती है कि—

द्वीपान्तर से लाये गये देवकुसुमपराग से सुरभित वायु से सुरतजनितश्रम को दूर करती हुई तूं इस राजा के साथ तालीवन की मर्मर ध्वनि से संगीतमय समुद्र के तट पर विहार करो।

कथा पुरुष व्यवहार का उदाहरण जैसे—

पूरा तपोवन काम के अधीन हो जाने पर, चन्द्रोदय के समय चन्द्र को

कथापुरुषव्यवहारः--

**उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥**

आदिग्रहणात्—

**तथागतायां परिहासपूर्वं सख्यां सखी वेत्रभृदावभाषे ।**
**"बाले ! व्रजामोऽन्यत" इत्यथैनां वधूरसूयाकुटिलं ददर्श ॥**

---

प्यन्वयः । चन्द्रोदयारम्भे = उदयोन्मुखचन्द्रे, अम्बुराशिः = समुद्र इव, परिवृत्त-धैर्यः कामवाणपातच्युतधैर्यः, हरोऽपि बिम्बफलाधरोष्ठे = बिम्बफलोपमाधरोष्ठे, उमामुखे = पार्वतीमुखे विलोचनानि = नेत्राणि, व्यापारयामास = पातयामास । शिवस्योत्कण्ठातिशयो नेत्राणीति बहुवचनेन व्यञ्जयन् कथापुरुषस्य शिवस्य पार्वत्या सह रहो व्यवहारः प्रतिभयोपदर्शितः ।

आदिग्रहणात् = कथापुरुषादिदर्शनेनेति अदिग्रहणात् यत् किञ्चिद्व्यवहार-स्यापि निबन्धनम् यथा—

वेत्रभृत्सखी तथागतायां सख्यां परिहासपूर्वं "बाले अन्यतः व्रजाम" इति आवभाषे, अथ वधूः एनां असूयाकुटिलं ददर्शत्येन्वयः । वेत्रभृत् = सुनन्दा तथागतायां = अजे दृष्टानुरागयां, सख्यां = इन्दुमत्याम् "सख्यशिश्वीति भाषा-याम्', इति निपानान्ङीष् । बाले = इन्दुमति, अन्यतः = अन्यं प्रति व्रजाम इति परिहासपूर्वं = सपरिहासं आवभाषे = उक्तवती । अथ = तदुक्त्यनन्तरं, वधूः = इन्दुमती, एनां = एनां सुनन्दां असूयया = रोषेण, कुटिलं ददर्श । अन्य-गमनस्यासह्यत्वात् ।

---

देखकर अधीर अम्बुराशि समुद्र की भाँति भगवान् शिव भी पार्वती को देखकर क्षुब्ध हो उठे । तथा पार्वती के बिम्बफल के समान अधरोष्ठ वाले मुख को उत्सुकतापूर्वक तीनों नेत्रों से देखने लगे ।

कथापुरुषादि आदिग्रहण से जैसे, यह इन्दुमती स्वयंवर के प्रसंग का पद्य—

अज को देखकर मुग्ध, अन्यत्र न जाने की इच्छा वाली इन्दुमती से सुनन्दा कहती है कि "चलो आगे चलें ।" जिसे सुनते ही वधू इन्दुमती असूया-पूर्वक सुनन्दा की ओर कटाक्षपात की ।

उक्त उदाहरणों में कवि ने अपनी अलौकिक प्रतिभा से अप्रत्यक्ष भावों का निबन्धन प्रत्यक्ष-सा किया है ।

इस प्रकार प्रतिभा के निरूपण के पश्चात् अब प्रतिभा के भेद करते हैं—

सा च द्विधा कारयित्री भावयित्री च। कवेरुपकुर्वाणा कारयित्री। साऽपि त्रिविधा सहजाऽऽहार्यौपदेशिकी च। जन्मान्तरसंस्कारापेक्षिणी सहजा। जन्मसंस्कारयोनिराहार्या। मन्त्रतन्त्राद्युपदेशप्रभवा औपदेशिकी। ऐहिकेन कियतापि संस्कारेण प्रथमां तां सहजेति व्यपदिशन्ति। महता पुनराहार्या। औपदेशिक्याः पुनरैहिक एव उपदेशकालः ऐहिक एव संस्कार-

---

एवमुदाहरणैः प्रतिभां निरूप्य विभजते—सा च = प्रतिभा च द्विधा = द्विविधा। १—कारयित्री २—भावयित्री इति। कवेः = कवयितुः, उपकुर्वाणा कारयित्री। सापि = कारयित्र्यपि, त्रिविधा = त्रिधा, १—सहजा, २—आहार्या, ३—औपदेशिकी इति। सहजां लक्षयति—जन्मान्तरसंस्कारापेक्षिणी = प्राक्तनजन्मसंस्कारसापेक्षा सहजा = स्वाभाविकी। अदृष्टयोनित्वात्। आहार्यं लक्षयति—जन्मसंस्कारयोनिः = जन्मसम्बन्धी यः संस्कारः स योनिर्यस्या सा संस्कारापेक्षिणी' आहार्या कारयित्रीतिशेषः। औपदेशिकीं लक्षयति-मन्त्रतन्त्राद्युपदेशप्रभवा = मन्त्रतन्त्रादीनामुपदेशः प्रभवः कारणं, योनिर्वा यस्या सा मन्त्रतन्त्राद्युपदेशसापेक्षा औपदेशकी। तिसृणामन्तरं दर्शयन्नाह—सहजाहार्ये—सहजाहार्ये प्राक्तनजन्मसंस्कारमपेक्षेते, औपदेशिकी तु ऐहिकमेव। तत्र सहजा कारयित्री प्रतिभा स्वल्पेनैव ऐहिकेन संस्कारेणोद्बुद्ध्यते, आहार्यातु महतेतिभेदः। औपदेशिकीकारयित्रीप्रतिभा तु ऐहिकमेवोपदेशं = संस्करमनति क्रम्यप्रवर्तते। यावदैहिकोपदेशसंस्कारं प्रवर्तमानौपदेशिकीतिभावः! अतः उक्तम्—औपदेशिक्याः

---

प्रतिभा दो प्रकार की होती है। १. कारयित्री, २. एवं भावयित्री। कारयित्री प्रतिभा कवि की उपकारिका होती है। यह भी तीन प्रकार की होती है। १—सहजा, २—आहार्या, ३—उपदेशिकी। उनमें सहजा पूर्वजन्म के संस्कारों से जन्मजात होती है। आहार्या (जन्म) संस्कार से अथवा इसी जन्म के शास्त्राभ्यास आदि से पैदा होती हैं। तथा औपदेशिकी मन्त्र तन्त्र देवता आदि की आराधना से गुरु के उपदेश आदि से होती है। सहजा कारयित्री प्रतिभा जन्मजात होने से इस जन्म के थोड़े से ही संस्कार से उद्बुद्ध हो जाती है। आहार्या कारयित्री प्रतिभा के लिये अधिक संस्कार या अभ्यास की आवश्यकता होती है। औपदशिकी प्रतिभा का जनक, यहीं का उपदेश काल या यहीं का संस्कार-

कालः। त इमे त्रयोऽपि कवयः सारस्वतः। इहजन्माभ्यासोद्भासित-भारतीक आहार्यबुद्धिराभ्यासिकः। उपदेशितदर्शितवाग्विभवो दुर्बुद्धिरौपदेशिकः। तस्मान्नेतरौ तन्त्रशेषकनुतिष्ठताम्। "नहि प्रकृतिमधुरा

---

=औप-देशिकीकारयित्रीप्रतिभायाः प्रभवः, पुनः ऐहिक एवोपदेशकालः, ऐहिक एव संस्कारकालः।

एनां त्रिविधां कारयित्रीं प्रतिभामवलम्ब्य कवयोऽपि त्रयो भवन्ति १—सारस्वतः, २—आभ्यासिकः, ३—औपदेशिकश्च।

सारस्वतं लक्षयति—जन्मान्तरेति=जन्मान्तरीयः यः संस्कारः, तेन प्रवृत्ता उद्बुद्धा सरस्वती काव्यघटनानुकूलावाग् यस्य सः सारस्वतः बुद्धिमान् कविर् भवति। आभ्यासिकं आहार्यबुद्धि लक्षयति—इहेति—इहजन्माभ्यासेन=ऐहिकाभ्यासेन उद्भासिता=उद्बोधिता भारती=घटनानुकूलावाग् यस्य सः आहार्यबुद्धिर् आभ्यासिकः कविः। औपदेशिकं लक्षयति—उपदेशितेति—गुरुणा उपदेशितः, दर्शितश्च वाग्विभवो यस्य सः दुर्बुद्धिरौपदेशिकः।

तस्मात् औपदेशिकाद् इतरौ आभ्यासिकसारस्वतौ कवी तन्त्रशेषम्=तन्त्र-मन्त्रादिकमैहिकमुपायं नानुतिष्ठताम्=नोपासाताम्। तत्रहेतुमाह—नहि इति। नहि=नैव, प्रकृतिमधुरा=स्वभावमधुरा द्राक्षा फाणितसंस्कारं=मत्स्यण्डीति-इक्षुविकारसंस्कारं "मत्स्यण्डी फाणितम्", इक्षुविकारः शर्करा सिता इत्यमरः।

---

काल होता है। इस प्रकार इन तीनों प्रतिभा से युक्त कवि भी तीन प्रकार के होते हैं—१-सारस्वत, २—आभ्यासिक, ३—औपदेशिक।

उनमें सारस्वत कवि बुद्धिमान् कहा जाता है इसकी काव्यकरण के अनुकूल सरस्वती जन्मान्तर के संस्कार से प्रवृत्त होती है। आभ्यासिक को आहार्यबुद्धि कहते हैं इसकी काव्यानुकूल भारती इसी जन्म के संस्कार से या शास्त्रादि के अभ्यास से उद्बुद्ध होती है। औपदेशिक को दुर्बुद्धि कहते हैं इसका काव्यानुकूल वाग्विभव गुरु से उपदिष्ट होता है या उदाहरण, मन्त्र तन्त्रादि से उपदर्शित होता है।

इन कवियों के विषय में आचार्यों का मत है कि औपदेशिक को छोड़कर शेष दोनों आभ्यासिक एवं सारस्वत कवियों के लिए मन्त्र तन्त्रादि का अनु-

द्राक्षा फाणितसंस्कारमपेक्षते" इत्याचार्याः । "न" इति यायावरीयः । एकार्थं हि क्रियाद्वयं द्वैगुण्याय सम्पद्यते । "तेषां पूर्वः पूर्वः श्रेयान्" इति श्यामदेवः । यतः—

सारस्वतः स्वतन्त्रः स्याद्भवेदाभ्यासिको मितः ।
औपदेशकविस्त्वत्र वल्गु फल्गु च जल्पति ॥

---

अपेक्षते = इच्छति, इत्याचार्याः = आचार्याणां मतम् ।

फाणितलक्षणं यदाहुः—

स एवेक्षुविकारेषु ख्यातः फाणित संज्ञया ।
इक्षो रसस्तु यः पक्वः किञ्चिद्गाढो बहुद्रवः ॥ इति ॥

राजशेखरः स्वकीयं मतमुपस्थापयति—"न इति" यायावरीयः = यायावर-सम्प्रदायः । एकार्थं = एकप्रयोजन क्रियाद्वयं = उपायद्वयं द्वैगुण्याय = फलप्रगुणाय सम्पद्यते । मधुराऽपि द्राक्षा फाणितेनापि संस्कृता प्रगुणायत एव । अतः सार-स्वताभ्यासिकावपि यदि मन्त्राद्युपायमनुतिष्ठताम् तदानीं तयोरपि कारयित्री शक्तिः प्रगुणा भवत्येव इति यायावरीयस्य ग्रन्थकर्तुर्मतम् । तेषां = त्रयाणामपि कवीनां पूर्वः पूर्वः, औपदेशिकादाभ्यासिकस्तस्मादपि सारस्वतः श्रेयान् श्रेष्ठ इति श्यामदेवः श्यामदेवस्य मतम् । यतः = यतश्चोक्तम्—सारस्वत इति । सारस्वतः = प्राक्तनजन्म सस्कारसंस्कारसहकृतैहिकसंस्काराजितशक्तिः, सारस्वतः कविः, स्वतन्त्रः = प्रत्यक्षा प्रत्यक्षभावोपनिबन्धनाप्रतिहतसञ्चारः स्याद् = भवेद, आभ्यासिक = महदायासोद्बुद्धजन्मान्तरीयसंस्काराहित शक्तिः मितः = परिमितो भवति औपदेशिककविः = मन्त्रतन्त्रीद्युद्बुद्धकवित्वशक्तिः अत्र = लोके वल्गु = कदाचित्सुन्दरं, मनोहरं, कदाचिच्च फल्गु = व्यर्थमेव जल्पति इति, पूर्वं पूर्वं एव श्रेयान् ।

---

ष्ठान आवश्यक नहीं है ! क्योंकि स्वभावतः मधुर द्राक्षा इक्षुरस ( राव ) से संस्कार की अपेक्षा नहीं करती । यायावर इससे विमत है । उनका कहना है कि किसी एक क्रिया के लिए अनुष्ठित दो उपाय फलपुष्टि के लिए होते हैं । श्यामदेव का मत है कि उनमें क्रमशः औपदेशिक से आभ्यासिक तथा आभ्यासिक से सारस्वत श्रेष्ठ होता है । क्योंकि—

"उत्कर्षः श्रेयान्" इति यायावरीयः। स चानेकगुणसन्निपाते भवति किन्तु--

बुद्धिमत्त्वं च काव्याङ्गविद्यास्वभ्यासकर्म च।
कवेश्चोपनिषच्छक्तिस्त्रयमेकत्र दुर्लभम्॥
काव्यकाव्याङ्गविद्यासु कृताभ्यासस्य धीमतः।
मन्त्रानुष्ठाननिष्ठस्य नेदिष्ठा कविराजता॥

---

"उत्कर्षः श्रेयान्" इति यायावरीयः! त्रिष्वपि सारस्वतादिषु यत्रोत्कर्षः =अनेकगुणसन्निपातः, स एव श्रेयान्=श्रेष्ठः। उत्कर्षोऽनेकगुणसन्निपाते भवति। उक्तश्चानेकगुणसन्निपात इति। बुद्धिमत्त्वं चेति—बुद्धिमत्त्वं= जन्मान्तरीयसंस्कारोद्बुद्धशक्तिमत्त्वं प्रथमस्य कवेर्गुणः, काव्याङ्गविद्यास्व- भ्यासकर्म च काव्याङ्गेषु=लोके, वृत्तकोषकलाचतुर्वर्गखड्गतुरगादिलक्षण- ग्रन्थेषु विद्यासु च=आन्वीक्षिक्यादिचतसृषु विद्यासु च अभ्यासकर्म=पुनः पुनरनुशीलनम्, एष द्वितीयस्य कवेर्गुणः, कवेश्च, उपनिषच्छक्तिः=वाल्मी- क्यादिकवेः रहस्यावबोधशक्तिः, कवित्वशक्तिर्वा त्रयं=एतत्त्रितयं एकत्र= एकस्मिन् दुर्लभम्। यत्रैतत्त्रितयं तत्रैवोत्कर्षः। तथा च—गुणसन्निपातेन कवि- राजता नेदिष्ठेति। पुनरुच्यते—काव्यकाव्याङ्गविद्यासु=काव्यं=पञ्चदशं विद्यास्थानं, काव्याङ्गविद्या=विद्यास्थानाङ्गविद्या, वा कोषकलाचतुर्वर्गखड्गतुरगादिलक्षण ग्रन्थो, तासु, कृताभ्यासस्य=विहिताभ्यासस्य आभ्यासिकस्य धीमतः=

---

काव्यरचना में सारस्वत कवि सर्वतन्त्रस्वतन्त्र होता है आभ्यासिक कवि सीमित होता है तथा औपदेशिक कवि कहीं रमणीय तथा कहीं व्यर्थ, निरर्थक, शब्दों का गुम्फन करता है।

यायावर का मत है कि इन कवियों में कोई कवि श्रेयान् है इसकी अपेक्षा उनके उत्कर्ष को श्रेयान् मानना चाहिए। वह उत्कर्ष अनेक गुणों के सम्बन्ध अर्थात् एकत्रीकरण से होता है। जैसा कि कहा गया है—

बुद्धिमत्ता अर्थात् जन्मान्तरीय संस्कार से उद्बुद्ध शक्तिमत्ता, काव्य के अङ्गभूत लोकाचार, कोशकला आदि विद्याओं का अभ्यास तथा उपनिषद् शक्ति, अर्थात् तन्त्रमन्त्रादि दैवीशक्ति ये तीनों एक कवि में दुर्लभ होते हैं।

काव्य एवं काव्याङ्ग विद्याओं में अभ्यस्त, आभ्यासिक कवि के गुणों से युक्त धीमान् (सारस्वत कवि के गुण से युक्त) तथा मन्त्र एवं तन्त्रों के

कवीनां तारतम्यतश्चैषं प्रायोवादः ।

एकस्य तिष्ठति कवेर्गृह एव काव्य-
मन्यस्य गच्छति सुहृद्भवनानि यावत् ।
न्यस्या (व्य?) विदग्धवदनेषु पदानि शश्व-
त्कस्यापि सञ्चरति विश्वकुतूहलीव ॥

---

स्वाभाविकसंस्काराहितबुद्धिमतः मन्त्रानुष्ठाननिष्ठस्य = मन्त्रतन्त्राद्यनुष्ठानतत्परस्य कस्यापि पुरुषस्य गुणत्रितययुक्तस्य, कविराजता = महाकवित्वं नेदिष्ठा करतलगतमेव । चरमोत्कर्षमुपगतायाः एव कवितायाः कवितात्वं तदभावे कुतः कवितेति प्रसिद्धे कथं कवितायां तारतम्यमिति शङ्कां निरस्यन्नाह = कवीनां तारतम्यं भवति । तारतम्यतश्चैष प्रायोवादः ।

एकस्य कवेः काव्यं गृह एव तिष्ठति अन्यस्य सुहृद्भवनानि यावद् गच्छति कस्यापि विश्वकुतूहली इव आविदग्धवदनेषु पदानि न्यस्य शश्वद् गच्छति । इत्यन्वयः । एकस्य = कस्यचिदपकृष्टस्य कवेः काव्यं, गृह एव = स्वप्रकोष्ठ एव तिष्ठति, अन्यस्य = अपरस्य कस्यचित्तदपेक्षयोत्कृष्टस्य मध्यमस्याभ्यासिकस्य वा काव्यं सुहृद्भवनानि=मित्रगृहाणि यावद्गच्छति । मित्रमात्रानन्ददायि भवति । तथा च कस्यापि = अनेकगुणसन्निपातार्जितोत्कर्षस्य कस्यैव काव्यं, विश्वकौतुकीव आविदग्धवदनेषु = प्राकृतजनादाविदग्धवदनेषु श्रुतिसुखाक्षरविन्यासवत्तया सादरं गीयमानानि पदानि, न्यस्य, शश्वत् सर्वदा सञ्चरति । शब्दार्थयोश्चमत्कारास्वादनपरत्वेन सहृदयानां, केवलं शब्दसौष्ठवमात्रेण प्राकृतानाञ्च हृदयमाह्लादयद् काव्यं विश्वाह्लादित्वं दधाति । यस्यकवेरित्थङ्कारसर्वतोगामि काव्यं स एवश्रेयानिति । सेयं = पूर्वोक्तेषु कविप्रभेदेषु प्रदर्शितेयं कारयित्री प्रतिभा ।

---

अनुष्ठान में तत्पर ( औपदेशिक कवि के गुणों से युक्त ) व्यक्ति की कविराजता उसके निकट ही होती है ।

कवियों का उत्कर्षापकर्ष परम्परा से प्रसिद्ध है—जैसा कि-कुछ एक कवि का काव्य ऐसा होता है जो कवि के घर तक ही रह जाता है कुछ एक कवि ऐसे होते हैं जिनके काव्य मित्रों के घर तक ही सीमित होते हैं किसी-किसी कवि का काव्य ऐसा होता है जो अपने पदों से, प्राकृत से विदग्धपर्यन्त सभी की जुबान पर थिरकता हुआ सारे संसार को विस्मित करता रहता है ।

**सेयं कारयित्री। भावकस्योपकुर्वाणा भावयित्री। सा हि कवेः श्रममभिप्रायं च भावयति। तया खलु फलितः कवेर्व्यापारतरुरन्यथा सोऽवकेशी स्यात्। 'कः पुनरनयोर्भेदो यत्कविर्भावयति भावकश्च कविः' इत्याचार्याः। तदाहुः—**

---

भावयित्रीं प्रतिभां निदर्शयन्नाह—भावकस्य = काव्यार्थभावनातत्परस्य सहृदयस्य, काव्यार्थं भावयति = सहृदयतासाहचर्येणास्वादयतीति भावकस्तस्योपकुर्वाणेति। सा हि = भावयित्री प्रतिभा हि, कवेः = कवयितुः, श्रमं = काव्यार्थघटनानुकूलशब्दार्थाहरणोद्भावनप्रयासं, अभिप्रायं = शब्दाद्यनिवेदितालौकिकचमत्कारात्मकं तत्त्वं, भावयति = अनुसन्दधाति। अनयैव सहृदयेषु तादृशालौकिकभावावगमो भवति। तया खलु भावयित्र्या प्रतिभया खलु, फलितः = फलवान्, कवेः = कवयितुः, व्यापारतरुः = काव्यकरणात्मको वृक्षः। अन्यथा = तदभावे, भावयित्रीं प्रतिभां विना, सः = काव्यतरुः अवकेशी = वन्ध्यः, अफलो वा स्यात्। तत्रत्यं सच्चमत्कारं रसमन्यच्च तत्त्वं सम्यग्ग्रहीतुमन्येषु जनसामान्येषु च निवेशयितुं भावयित्री प्रतिभैव सर्वभरसहेतिभावः।

कविभावकयोरभेदप्रतिपादनात् कारयित्रीभावयित्र्योः प्रतिभयोरप्यभेद इति प्रतिपिपादयिषुराचार्याणां मतं दर्शयति—कः पुनरनयोः = कारयित्रीभावयित्रीप्रतिभयोर्भेदः, नास्ति भेद इत्यर्थः यतो द्वे अपि एकस्मिन्नेव भवतः, यतो हि कविः = कारयिता, भावयति। भावकश्च, कवयति। इत्याचार्याणां मतम्। यतो ते आहुः—प्रतिभेति।

---

यह हुई कारयित्री प्रतिभा। अब भावयित्री प्रतिभा का विवेचन करते हैं। भावक, अर्थात् सहृदय पाठक, की उपकारक भावयित्री प्रतिभा होती है। यही प्रतिभा कवि के श्रम या अभिप्राय को समझती है। अथवा फलोन्मुख कवि श्रम को फल प्रदान करती है। कवि का व्यापार रूप वृक्ष इसी भावयित्री प्रतिभा से फलवान् होता है यदि भावयित्री प्रतिभा न हो तो कवि व्यापार-रूपी वृक्ष, खाली निष्फल ही रह जायेगा।

कुछ आचार्यों का मत हैं कि कवि एवं भावक में कोई भेद नहीं है क्योंकि

**प्रतिभातारतम्येन प्रतिष्ठा भुवि भूरिधा।**
**भावकस्तु कविः प्रायो न भजत्यधमां दशाम् ॥**

"न" इति कालिदासः। पृथगेव हि कवित्वाद्भावकत्वं, भावकत्वाच्च कवित्वं, स्वरूपभेदाद्विषयभेदाच्च। यदाहुः—

---

प्रतिभातारतम्येन = प्रतिभाया उत्कर्षापकर्षविशेषेण, भुवि = लोके, भूरिधा= अनेकधा प्रतिष्ठा = सम्मानो यशो वा भवति। प्रतिभाया अपकर्षेण काव्य-कुर्वाणस्य अपकृष्टमास्पदम् उत्कर्षेण च उत्कृष्टमास्पदमित्यर्थः। प्रायः = किन्तु भावकः = भावयित्रीप्रतिभासम्पन्नः, कविः = कवयिता, कदापि, अधमां दशां अपकृष्टामवस्थां न भजति।

विरुद्धं मतं दर्शयति—'न' इति। कालिदासः एकत्रैवोभयोः प्रतिभयोः स्थिति न मनुते। घटत्वपटत्वयोरिव। स्वरूपभेदात् = लक्षणभेदात्, विषयभेदात् च पृथगेव कवित्वाद्, भावकत्वं भावकत्वात् च कवित्वम्। स्वरूपभेदस्तु कवृ-वर्णे इति धातोर्निष्पन्नः कविशब्दः, यः काव्यं कुरुते स कविः इति प्रवृत्ति-निमित्तमादधाति ण्यन्तात् भूधातोर्निष्पन्नो भावकशब्दः, यः काव्यार्थभावना-परिपक्वबुद्धिः सत्वोद्रेकेण काव्यार्थतत्त्वं भावयति स भावक इति प्रवृत्तिनिमित्त-मादधाति। एवञ्च कवेः काव्यनिर्माणाय शब्दार्थालम्बनपूर्वकं वर्णनीया घट-पटादयो विषयाः, भावकस्य तु रसास्वादनमात्रविषय इति। स्पष्टं भेदः।

---

कवि भावना करता है अतः भावक है एवं भावक भी कवि होता है। जैसा कि कहा गया है—

प्रतिभा के तारतम्य से संसार में अनेक प्रकार की प्रतिष्ठा होती है जो कवि भावक होता है, अर्थात् भावनापूर्वक कविता करता है वह कभी भी अधम दशा को नहीं प्राप्त करता।

कालिदास का मत इससे भिन्न है। उनका कहना है कि कवित्व से भावकत्व भिन्न है तथा भावकत्व से भिन्न कवित्व है क्योंकि कवित्व के स्वरूप (लक्षण) एवं विषय से भावकत्व का स्वरूप एवं विषय भिन्न है। जैसा कि कहते हैं—

कश्चिद्वाचं रचयितुमलं- श्रोतुमेवाऽपरस्तां,
कल्याणी ते मतिरुभयथा विस्मयं नस्तनोति ।
नह्येकस्मिन्नतिशयवतां सन्निपातो गुणाना-
मेकः सूते कनकमुपलस्तत्परीक्षाक्षमोऽन्यः ॥

ते च द्विधाऽरोचकिनः सतृणाभ्यवहारिणश्च" इति मङ्गलः । 'कव-

---

यदाहुः, कश्चिदिति—कश्चिद् = जनः, वाचं = काव्यं, रचयितुं = निर्मातुं, अलम् = समर्थः, अपरः = अन्यश्च कश्चित्, श्रोतुं = पर्यालोचयितुं, एव = केवलमलम् । किन्तु—उभयथा = रचनश्रवणोभयत्र क्षमा, कारयित्रीभावयित्रीत्युभयात्मिका, कल्याणी = शर्मदा, मतिः = प्रतिभा, नः = अस्माकं, विस्मयं आश्चर्यं तनोति । आश्चर्यहेतुमाह—हि = यतः, एकस्मिन् = एकत्र, अतिशयवतां = सातिशयानां गुणानां सन्निपातः सङ्घातो न दृश्यते । पश्य, एक उपलः, कनकं, सूते = उत्पादयति, अन्यः = अपरः उपलः निकषइत्यर्थः, तत्परीक्षाक्षमः = सुवर्ण परीक्षासमर्थो भवति । न य उत्पादयति स एव परीक्षते । एवमेव न यः कवते स एव भावयतीति भावः ।

ते भावका द्विधा । १—अरोचकिनः, २—सतृणाभ्यवहारिण इति । अरोचकः अस्त्यस्मिन्निति अरोचकी, अरोचकः, रोगविशेषः न रोचयति, आस्वादयतीति व्युत्पत्त्या । अरोचकेण सुस्वादेप्यन्ने प्रीतिर्न भवति । सतृणाभ्यवहारिणस्तु = तृणमपरित्यज्य सतृणं, सतृणमभ्यवहरन्ति इति सतृणाभ्यवहारिणः, इति मङ्गलः = मङ्गलमतम् । न केवलं भावका एव अपि तु कवयोऽपि अरोचकिनः सतृणाभ्यव-

---

कोई वाणी की रचना ( कविता ) करने में समर्थ होता है तथा कोई केवल उसका श्रवण ( भावन ) करने में ही समर्थ होता है । तुम्हारी संरचना एवं भावना दोनों में समर्थ बुद्धि हमें आश्चर्य पैदा कर रही है । क्योंकि एक में अनेक गुणों का सन्निधान नहीं दीख पड़ता । देखो, एक पत्थर स्वर्ण को पैदा करता है तथा उसकी परीक्षा में दूसरा ही पत्थर समर्थ होता है ।

वे भावक दो प्रकार के होते हैं १—अरोचकी २—तथा सतृणाभ्यवहारी ऐसा मङ्गल आचार्य का मत है । वामनीयों का मत है कि केवल भावक के ही नहीं बल्कि कवि के भी ये दो भेद हैं । यायावरीय इनके चार भेद मानते हैं

योऽपि भवन्ति' इति वामनीयाः। 'चतुर्द्धा' इति यायावरीयः। मत्सरिणस्तत्त्वाभिनिवेशिनश्च। "तत्र विवेकिनः पूर्वे तद्विपरीतास्तु ततोऽनन्तराः" इति वामनीयाः। "अरोचकिता हि तेषां नैसर्गिकी ज्ञानयोनिर्वा। नैसर्गिकी हि संस्कारशतेनाऽपि वङ्कमिव कालिकां ते न जहति। ज्ञानयोनौ तु तस्यां विशिष्टज्ञेयवति वचसि रोचकिता वृत्तिरेव" इति

---

हारिणो भवन्ति इति वामनीयानां मतम्। यायावरीयास्तु चतुर्द्धा मन्यन्ते। १—अरोचकिनः, २—सतृणाभ्यवहारिणः, ३— मत्सरिणः, ४—तत्त्वाभिनिवेशिनश्च।

अरोचकिसतृणाभ्यवहारित्वेन भावकानां कवीनाञ्च द्विप्रकारत्वं स्वीकुर्वतां वामनीयानामाचार्याणां मते पूर्वे = आरोचकिन, विवेकिनः = विवेकशीलाः ततोनन्तराः = सतृणाभ्यवहारिणः, तद्विपरीताः अविवेकिन इत्यर्थः।

यायावरीयः, अरोचकिता, नैसर्गिकी ज्ञानयोनिरि" ति द्विधा स्वीकृत्य ज्ञानयोनेररोचकिताया रोचकितात्वमपि दर्शयति। तेषां भावकानां अरोचकिता नैसर्गिकी = स्वाभाविकी, ज्ञानयोनिः = बुद्धिपूर्विका वा भवतः। तत्र ते=भावकाः, नैसर्गिकीं अरोचकितां, वङ्ककालिकामिव संस्कारशतेनापि न जहति = न त्यजन्ति, तादृशारोचकिनां सुन्दरं सरसमपि काव्य नानन्दं जनयति। ज्ञानयोनौ तु तस्यां = बुद्धिपूर्विकायामरोचकितायां विशिष्टज्ञेयवति = सविशेषरसालङ्कारात्मके वचसि, रोचकिता वृत्तिः = सादरो व्यवहारः, रुच्या प्रवृत्तिरिति।

---

१—आरोचकी २—सतृणाभ्यवहारी, ३ – मत्सरी तथा ४—तत्वाभिनिवेशी। वामनीय आचार्यो का मत है आरोचकी एवं सतृणाभ्यवहारी में पहला विवेकी होता है तथा दूसरा अविवेकी। (यहाँ विवेकिन बहुवचनान्त पद अरोचकिनः बहुवचनान्त पद के अनुरोध से है न कि यायावरीयों से मान्य चारों भेदों में से किसी का ग्रहण है क्योंकि वामनीय तो दो ही भेद मानते हैं। हाँ यहाँ यह कहा जा सकता है कि बहुवचनान्तपद से आरोचकी भावक एवं कवि दोनो तथा सतृणाभ्यवहारी भी भावक एवं कवि दोनों को ग्रहण किया गया है।)

अरोचकी भावक की अरोचकिता भी दो प्रकार की होती है। एक तो स्वाभाविकी तथा दूसरी ज्ञानपूर्विका। (आरोचकिता एक रोग विशेष है जिससे सुन्दर भी पदार्थ अरुचिकर लगता है)। स्वाभाविकी रोचकिता सैकड़ो

यायावरीयः। किञ्च सतृणाभ्यवहारिता सर्वसाधारणी। तथाहि व्युत्पित्सोः कौतुकिनः सर्वस्य सर्वत्र प्रथमं सा। प्रतिभाविवेकविकलता हि न गुणागुणयोर्विभागसूत्रं पातयति। ततो बहु त्यजति बहु च गृह्णाति। विवेकानुसारेण हि बुद्धयो मधु निष्यन्दन्ते। परिणामे तु यथार्थदर्शी स्यात्। विभ्रमभ्रंशश्च निःश्रेयसं सन्निधत्ते। मत्सरिणस्तु प्रतिभातमपि

---

किञ्च, सतृणाभ्यवहारिता=तृणमपरित्यज्य ग्रहणशीलता, सर्वजनसाधारणी= निखिलजनसामान्या। तथाहि=अत एव, सर्वस्य व्युत्पित्सोः=बुभुत्सोः, कौतुकिनः=कुतुकवतः, सर्वत्र=रुच्यारुच्येषु सर्वेषु काव्येषु प्रथमं सा सतृणाभ्यवहारिता दृश्यते। प्रतिभाविवकविकलता, प्रतिभा=संस्काराभ्यासादिजन्या, विवेकः=वस्तुप्रविभागज्ञानं, तयोर्या विकलता=अभावः, सा, गुणागुणयोः= ग्राह्याग्राह्ययोस्तत्वातत्वयोर् विभागसूत्रं न पातयति। ततः=तया तयोर्विकलतया, जनः, बहुत्यजति, बहु च गृह्णाति। विवेकानुसारेण=वस्तुप्रविभागज्ञानानुसारेण, हि बुद्धयः=प्रतिभाः मधु=अमृतं निष्यन्दन्ते। ताभिरेव विवेकबुद्धिभिः, परिणामे=अन्ततः, यथार्थदर्शी=यथार्थतत्वज्ञाता जनो भवति। विभ्रमभ्रंशः=व्यामोहस्य राहित्यं निश्रेयसं=कल्याणं च सन्निधत्ते=समीपयति इत्यर्थः। मत्सरिणः=अन्यशुभद्वेषिणोऽसूयालोः प्रतिभातमपि=प्रतिबुद्धमपि रहस्यं परगुणेषु=परगुणश्लाघासु वाचंयमत्वात्=मौनित्वात् न प्रतिभातम्=न प्रति-

---

संस्कारों से भी दूर नहीं होती जैसे कालिमा राँगे से अलग नहीं की जा सकती। ज्ञानपूर्विका अरोचकिता रसालङ्कारादि विशिष्ट काव्यरचना के विषय में रोचकिता ही हो जाती है। ऐसा यायावरीय का मत है।

सतृणाभ्यवहारिता सर्वसाधारण है इसलिये (ज्ञानेच्छु) बोधेच्छु एवं कौतुकी सभी में सर्वप्रथम सतृणाभ्यवहारिता दीख पड़ती है। प्रतिभा एवं विवेक ( वस्तु प्रविभागात्मक व्युत्पत्ति ) के विना गुणों या दोषों का विभाग नहीं हो पाता। प्रतिभा एवं विवेक की विकलता, आवश्यक बहुत सी वस्तुओं को छोड़ देती है तथा बहुत-सी अनावश्यक वस्तुओं को ग्रहण भी कर लेती है बुद्धियाँ विवेक के बल पर ही मधुस्राव (तत्वस्राव) करती हैं। विवेक बुद्धियों से ही अन्ततः लोग तत्वदर्शी होते हैं। क्योंकि उसके विना ( विभ्रमभ्रंश ), मोह का नाश नहीं

न प्रतिभातं, परगुणेषु वाचंयमत्वात्। स पुनरमत्सरी ज्ञाता च विरलः। तदुक्तम्--

> कस्त्वं भोः, कविरस्मि, काप्यभिनवा सूक्तिः सखे ! पठ्यतां,
> त्यक्ता काव्यकथैव सम्प्रति मया, कस्मादिदं श्रूयताम्।
> यः सम्यग्विविनक्ति दोषगुणयोः सारं. स्वयं सत्कविः,
> सोऽस्मिन्भावक एव नास्त्यथ भवेद्दैवान्न निर्म्मत्सरः॥

तत्त्वाभिनिवेशी तु मध्येसहस्रं यद्येकस्तदुक्तम्—

---

बुद्धम्। स, भावकः पुनरमत्सरो = अनीर्ष्यालुः अनसूयालुः ज्ञाता = तत्त्ववेत्ता च विरलः = दुर्लभः। तदुक्तम् कस्त्वं भो ! इत्युत्तरप्रत्युत्तरात्मकं पद्यम् यथा।

भो त्वं कः ? इतिप्रश्नः, कविरस्मि इत्युत्तरम्, पुनश्च प्रश्नः—हे सखे ! अभिनवा = अन्यैरस्पृष्टा नूतना काचिद् सूक्तिः पठ्यताम् इति। तदुत्तरञ्च, मया, काव्यकथैव त्यक्ता = परित्यक्ता। पुनश्च प्रश्नः, कस्मदिदम् ? तदुत्तरम् श्रूयताम् = आकर्ण्यताम्। यः = विद्वान् दोषगुणयोः सारं = तत्त्वं, याथार्थ्यं सम्यग् = पूर्णतया विविनक्ति = निरूपयति, तथा च स्वयमेव सत्कविः स्यात्, एतादृशो भावक एवेह नास्ति, अथ = अस्ति चेत् स दैवात् = संयोगात् निर्मत्सरः = अनसूयो न भवेत्। इत्यस्माद्धेतोः काव्यकथैव त्यक्ता। इति।

---

होता तथा विना मोह नाश के निःश्रेयस ( तत्त्वबोध ) की प्राप्ति नहीं होती।

मत्सरी भावक को तो काव्यगुण भासित होकर भी उसकी मौनिता के कारण अप्रतिभासित ही रहते है। क्योंकि दूसरों के गुणों के विषय में वे मौन ही रहते हैं। जो काव्यादि गुणों को समझता हो तथा मत्सरी भी न हो ऐसा भावक दुर्लभ ही है। जैसा कि कहा गया है—

प्रश्न—भाई तुम कौन हो ?

उत्तर—मैं कवि हूँ।

प्रश्न—तो मित्र कोई नई सूक्ति सुनाओ।

उत्तर—मित्र इस समय तो मैंने काव्य की बातें ही छोड़ दी हैं।

प्रश्न—ऐसा क्यों ?

उत्तर—सुनो, जो कविता के दोष एवं गुणों को भलीभांति समझ सकता

तत्त्वाभिनिवेशी तु मध्ये सहस्रं यद्येकस्तदुक्तम्—

शब्दानां विविनक्ति गुम्फनविधीनामोदते सूक्तिभिः,
सान्द्रं लेढि रसामृतं, विचिनुते तात्पर्यमुद्रां च यः।
पुण्यैः सङ्घटते विवेक्तृविरहादन्तर्मुखं ताम्यतां
केषामेव कदाचिदेव सुधियां काव्यश्रमज्ञो जनः॥

---

तत्त्वाभिनिवेशिनो दौर्लभ्यं दर्शयन्नाह—तत्त्वाभिनिवेशी तु मध्येसहस्रं= सहस्रसंख्याकेषु जनेषु यद्येकस्तदुक्तम्—

यः शब्दानां=पदानां गुम्फनविधीन्=आवापोद्वापाभ्यां रचनाप्रकारं विविनक्ति=विचारयति। अत्रैतादृशशब्दोपादानेनैतादृक्चमत्कारो जायते, तथा चैतादृक्पदपरिहारेणापीति पदन्यासप्रकारं यो विचारयति। सूक्तिभिः= विलक्षणभावावगमयित्रीभिः, सूक्तिभिः, आमोदते=भृशं प्रसीदति। काव्यस्थं रसरूपममृतं सान्द्रं=घनं लेढि=आस्वादयति। तात्पर्यमुद्रां, अत्र कवेस्तात्पर्य-मिति विचारयितुं यः प्रभवति। विवेक्तृविरहात्=विवेचकाभावात् अन्तर्मुखं= आभ्यन्तरमेव ताम्यतां=क्लेशमनुभवतां केषामेव सुधियां=अल्पीयसामेव सुधियाम्, कवीनां पुण्यैः=सुकृतैः, काव्यश्रमज्ञो=काव्यतत्त्वज्ञो भावको जनः सङ्घटते=लब्धो भवति।

---

हो तथा स्वयं सत्कवि भी हो ऐसा भावक ही इस भूतल पर नहीं है। अथवा है भी तो दैववश वह मात्सर्यरहित नहीं है। इसलिए काव्यकथा ही मैंने छोड़ दी है।

तत्त्वाभिनिवेशी तो हजार में कहीं एक होता है, जैसा कि कहा गया है।

काव्यरचना के श्रम को समझने वाला सच्चा समालोचक, जो शब्दों के विन्यास को भलीभाँति समझता हो, सूक्तियों में आनन्दित होता हो घनानन्द रस का आस्वादन करता हो तथा तात्पर्यावगमक मुद्राओं ( भङ्गिमाओं ) को जान लेता हो, ऐसा ( व्यक्ति ) उन कवियों को बड़े पुण्य से ही मिल पाता है जो ( कवि ), सच्चे समालोचक के अभाव में अन्दर ही अन्दर अत्यन्त दुःख का अनुभव करते रहते हैं।

ऐसी कौन-सी उपकारक वस्तु है जो कवियों के लिए भावक न बन जाता हो। भावक ही कवि का स्वामी है मित्र है मन्त्री है शिष्य है तथा आचार्य भी वही है।

स्वामी मित्रं च मन्त्री च शिष्यश्चाचार्य एव च ।
कवेर्भवति ही चित्रं किं हि तद्यन्न भावकः ॥
काव्येन किं कवेस्तस्य तन्मनोमात्रवृत्तिना ।
नीयन्ते भावकैर्यस्य न निबन्धा दिशो दश ॥
सन्ति पुस्तकविन्यस्ताः काव्यबन्धा गृहे गृहे ।
द्वित्रास्तु भावकमनःशिलापट्टनिकुट्टिताः ॥
सत्काव्ये विक्रियाः काश्चिद्भावकस्योल्लसन्ति ताः ।
सर्वाभिनयनिर्णीतौ दृष्टा नाट्यसृजा न याः ॥

---

स भावकः, कवेः सर्वस्वं भवति । उपदेशदानादिना स स्वामी, हिताहिते दोषगुणौ निरूप्य स्वेच्छया गमनानुमन्तृत्वात् मित्रम्, लक्ष्यप्राप्तौ मन्त्रणादातृत्वात् मन्त्री, दोषाच्छादकत्वान्महदुपकारकत्वात् शिष्यः, सर्वोपदेष्टृत्वादाचार्यः, ही चित्रम् = महदाश्चर्यम् किम् = किं हितकारकं वस्तुजातमस्ति यत् भावकः कवीनां कृते न भवति ।

तन्मनोमात्रवृत्तिना = कवयितुर्मनोमात्रनिष्ठेन काव्येन, तस्य कवेः = मनोमात्रनिष्ठकाव्यस्य कर्तुः कवेः, किं = किं फलम् । यस्य कवेः, निबन्धाः = रचनाः, भावकैर् दश दिशो न नीयन्ते = प्राप्यन्ते, पुस्तकविन्यस्ताः = पुस्तकेषु लिखिताः काव्यबन्धा गृहे गृहे भवन्ति, किन्तु काव्यबन्धास्तु वस्तुतः द्वित्राः = द्वौ त्रयो वा, ये भावकमनःशिलापट्टनिकुट्टिताः = भावकमनोनिकषपरीक्षिता विराजन्ते ।

सत्काव्ये, ता, काश्चित् = अपूर्वाः, विक्रियाः = विकाराः उल्लसन्ति, = स्फुरन्ति

---

कवि के हृदय में ही स्थित रह जाने वाले उस काव्य से क्या लाभ ? जो भावकों से दशों दिशाओं की छोर तक न पहुँचा दिया जाय ।

पुस्तक मात्र में टङ्कित काव्यप्रबन्ध तो घर-घर में बहुत से पड़े हैं । काव्य तो वस्तुतः वे दो तीन ही हैं जो भावकों के चित्तरूपी कसौटी पर खरे उतरे हैं ।

सत्काव्यों में भावकों के कुछ ऐसे भाव भी उल्लसित हो जाते हैं जिसे सभी अभिनयों के विवेचक भरत मुनि भी नहीं देख पाये हैं ।

वाग्भावको भवेत्कश्चित्कश्चिद् हृदयभावकः ।
सात्त्विकैराङ्गिकैः कश्चिदनुभावैश्च भावकः ॥
गुणादानपरः कश्चिद्दोषादानपरोऽपरः ।
गुणदोषाहृतित्यागपरः कश्चन भावकः ॥

---

याः नाट्यसृजा ( अपि )=भरतेनाऽपि, सर्वाभिनयनिर्णीतौ, सात्त्विकादिचतुरभिनयनिर्णीतौ अपि न दृष्टाः=नानुभूताः ।

भावकानामनेकविधत्वं दर्शयति-कश्चिद् वाग्भावको भवति, वाचां=शब्दानां सौष्ठवमेव भावयति, शब्दालङ्कारैस्तृप्यति । यथा प्रथमेऽध्याये सुवर्णनामप्रचेताश्चित्राङ्गदशेषाः शब्दसौष्ठवभावका नाम्ना निर्दिष्टाः । कश्चिद् हृदयभावकः । =वस्तुतत्वभावकः, यथोक्तं तत्रैव "वास्तवं पौलस्त्य इति" ! कश्चन वाचिकसात्त्विकाङ्गिकाहार्येषु चतुर्ष्वभिनयानुभावेषु सात्त्विकाङ्गिकाभ्यामनुभावाभ्यां भावयति न तु वाचिकैः । तत्र तात्पर्यमिदम्, काव्यत्वं वाचिकानुभावस्यैवाभियुक्तैः स्वीकृतम् अन्याभिनयानुभवाभिव्यक्तौ चमत्कारस्य सत्वेपि न काव्यत्वं शब्दप्रतिपाद्यत्वाभावात् । अतः काव्यातिरिक्तेषु नृत्तनृत्यादिषु तत्परत्वात् सात्त्विकैर् आङ्गिकैश्चभिनयानुभावैर् भावयन्ति । एतादृशोऽपि कश्चन भावको भवति । चकाराद् अनुभावैर् इति चतुर्भिरनुभावैरपि कश्चन भावको भवति यथा भरतः ।

कश्चन, गुणादानपरः=काव्यनिष्ठैर् गुणैरेव तृप्यति यथा उपमन्युः । गुणोपादानिकमुपमन्युर् इत्युक्तं तत्रैव । कश्चन दोषादानपरः, कश्चन दोषनिरूपणे नैव काव्यनिष्ठदोषादानेनैव वा तृप्यति यथा तत्रैव—दोषाधिकरणं धिषणः । कश्चन गुणादानदोषत्यागाभ्यां तृप्यति । वा गुणदोषयोर्ग्रहणत्यागाभावेन तृप्यति । पाठमात्रेण इति । यथा सतृणाभ्यवहारी ।

---

कोई श्रव्य काव्य का भावक होने से शब्द विन्यास की ही भावना करता है। कोई वस्तु तत्व का भावक होता है। कोई नृत्त या नृत्य मात्र निष्ठ, सात्विक एवं आङ्गिक अभिनयों के अनुभावों के माध्यम से ही भावक होता है। कोई सभी अनुभावों से भावना करता है।

कोई काव्यों से केवल गुणों को ग्रहण करता है। कोई केवल दोषों का भावक

अभियोगे समानेऽपि विचित्रो यदयं क्रमः।
तेन विद्मः प्रसादेऽत्र नृणां हेतुरमानुषः॥
न निसर्गकविः शास्त्रे न क्षुण्णः कवते च यः।
विडम्बयति सात्मानमाग्रहग्रहिलः किल॥
कवित्वं न स्थितं यस्य काव्ये च कृतकौतुकः।
तस्य सिद्धिः सरस्वत्यास्तन्त्रमन्त्रप्रयोगतः॥

---

अभियोगे समानेऽपि अभियुक्तानां भावकानां यदयं विचित्रः=विविधः क्रमः, तेन अत्र=लोकेऽस्मिन् नृणां=लोकानां प्रसादः=प्रसन्नता अमानुषः= मनुष्यबुद्धेरगम्यः प्रतीयते।

यस्तु न निसर्गकविः=सांसिद्धिकः सारस्वतो वा कविः, न च, शास्त्रे क्षुण्णः=आभ्यसिकः शास्त्रेषु कृताभ्यासः, सन् कवते=कवितां रचयति स आग्रहग्रहिलः=हठाग्रहगृहीतः आत्मानं=स्वात्मानं विडम्बयति=तिरस्कुरुते किल=निश्चयेनैव।

कवित्वं न स्थितम् इति—सारस्वताभ्यासिकयोः कव्योः प्राक्तनसंस्कारोपहितशक्तिकत्वात् कवित्वं सिद्धं भवति। यस्य एतादृशं कवित्वं न भवति, भवति

---

होता है कोई गुणों को ग्रहण तथा दोषों के त्याग में तत्पर रहता है :

एक ही अभियोग में जो इस प्रकार का विचित्र क्रम दिखाई पड़ता है इससे यही जान पड़ता है कि लोगों की प्रसन्नता में कोई अमानुष ही हेतु है !

जो सांसिद्धिक सारस्वत कवि नहीं है तथा जिन्हें शास्त्रों का अभ्यास भी नहीं है वे काव्य निर्माण के आग्रह से ग्रहिल होकर केवल अपनी विडम्बना ही करते हैं।

सारस्वत एवं आभ्यासिक दोनों कवित्वशक्ति से जो वञ्चित है तथा काव्य करने की उत्कण्ठा रखता है उसे सरस्वती के तन्त्र मन्त्रादि प्रयोग से प्रयोग सिद्धि मिल जाती है।

**पदान्तरं वेत्ति सुधीः स्ववाक्यपरवाक्ययोः ।**
**तदा स सिद्धो मन्तव्यः, कुकविः कपिरेव वा ॥**
**कारयित्रीभावयित्र्याविती मे प्रतिभाभिदे ।**
**अथातः कथयिष्यामो व्युत्पत्तिं काव्यमातरम् ॥**

इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे चतुर्थोऽध्यायः पदवाक्यविवेकः ।

---

च काव्ये कौतुकः स सरस्वत्यास्तन्त्रमन्त्रप्रयोगमनुतिष्ठतात् । तेन तस्य कवित्वसिद्धिर्भवति ।

तदैव स सिद्धः कविर् मन्तव्यः, यदा स्ववाक्यपरवाक्ययोः = कविकवीतर वाक्ययोः काव्यशास्त्रवाक्ययोरित्यर्थः, पदान्तरं = पदार्थैकवर्ण्यत्वेऽपि पदन्यास-वैचित्र्यं वेत्ति जानाति । अन्यथा पदान्तरज्ञानाभावे, स कविः कुकविः,भवेत् वा कपिरेव भवेत् । चापल्यात् न तु वस्तुतः कविः ।

एकस्या एव प्रतिभायाः कारयित्री भावयित्री चेति द्वौ भेदौ सप्रपञ्चं निरूपितौ । अथातः परं काव्यमातरं = काव्यजननीं व्युत्पत्तिं कथयिष्यामः । इति ।

---

जो सुधी काव्य एवं काव्येतर वाक्यों में जब पदवैचित्र्य ( उचित पदों के निवेश ) को समझने लगता है तब वह ( कवि ) सिद्ध हो जाता है अन्यथा वह कुकवि ही होता है ।

इस प्रकार प्रतिभा के ही इन दो भेदों कारयित्री एवं भावयित्री का विवेचन किया गया । अब जो काव्य की जननी है उस व्युत्पत्ति का निरूपण करेंगे ।

# पञ्चमोऽध्यायः

## काव्यपाककल्पः

'बहुज्ञता = व्युत्पत्तिः' इत्याचार्याः। सर्वतोदिक्का हि कविवाचः। तदुक्तम्---प्रसरति किमपि कथञ्चन नाभ्यस्ते गोचरे वचः कस्य।

इदमेव तत्कवित्वं यद्वाचः सर्वतोदिक्काः ॥

'उचितानुचितविवेको व्युत्पत्तिः' इति यायावरीयः। 'प्रतिभाव्यु-

---

"व्युत्पत्ति काव्यमातरम् इति इत्युपसंहारे चतुर्थस्य सर्गस्योक्तत्वाद् उक्तां व्युत्पत्तिं लक्षयन्नाह-बहुज्ञतेति---आचार्याणां मते बहुज्ञता = बहून् नैकान् विषयान् जानाति, इति बहुज्ञस्तस्य धर्मो बहुज्ञता सैव व्युत्पत्तिः। सर्वतोदिक्काः = सर्वविषयावगाहिन्यः कविवाचः परिणतवचसां कवीनां वाचो भवन्ति। तदुक्तम्---

कस्य अभ्यस्ते गोचरे किमपि वचः कथञ्चन न प्रसरति। तत् कवित्वं इदम् एव यत् वाचः सर्वतोदिक्काः इत्यन्वयः। कस्य = जीवस्य, आदुर्बुद्धेः कवेः अभ्यस्ते = कृताभ्यासे, गोचरे = विषये, किमपि वचः = स्वल्पं वचः यत्किञ्चिदर्थप्रतिपादकं वचः कथञ्चन = येन केनापि प्रकारेण, न प्रसरति, = प्रसरत्येवेत्यर्थः। अभ्यस्तं विषयमधिकृत्य येन केनापि यत् किञ्चित् वक्तुं शक्यते न तत्र किमपि वैशिष्ट्यम् इत्यर्थः। तत् कवित्वं = प्रसिद्धं कवित्वम्, इदमेव = एतदेव, यत् वाचः = काव्यानि, सर्वतोदिक्काः = अभ्यस्तानभ्यस्तसर्वविषयसाधारणाः स्युः। एतादृशो वाचो व्युत्पत्त्यधीना इति व्युत्पत्तिरेव काव्यमाता।

न बहुज्ञता व्युत्पत्तिरपि तु बहुज्ञताया निष्कर्षभूत उचितानुचितविवेकः = औचित्यविवेको वस्तुविषयाणामेव, व्युत्पत्तिः। अर्थात् यथास्थानं यथोचितशब्दार्थालङ्कार-रसादिष्वन्युपादानं व्युत्पत्तिः। शक्त्याः प्रतिभाव्युत्पत्ती कार्ये तथा

---

आचार्यों के मत में बहुज्ञता ही व्युत्पत्ति कही जाती है। क्योंकि व्युत्पत्ति काव्य की माता है तथा काव्य कविवाणी है जो कविवाणी सर्वतोमुखी कही गई है। जैसा कि कहा गया है

अभ्यस्त विषयों में किसी प्रकार कुछ-कुछ किसकी वाणी प्रसरित नहीं होती ? वस्तुतः कवित्व तो वह है जिसमें वाणी का प्रसार सर्वतोमुखी हो।

यायावर के मत में बहुज्ञता व्युत्पत्ति नहीं है बल्कि, उचित एवं अनुचित का विवेक ही व्युत्पत्ति है। जो बहुज्ञता का फलभूत है।

त्पत्त्योः प्रतिभा श्रेयसी' इत्यानन्दः। सा हि कवेरव्युत्पत्तिकृतं दोष-मशेषमाच्छादयति। तदाह—

अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः।
यस्त्वशक्तिकृतस्तस्य झगित्येवावभासते॥

शक्तिशब्दश्चायमुपचरितः प्रतिभाने वर्त्तते।

---

च तयोर्मध्ये प्रतिभा श्रेयसी इत्यानन्दमतम्। सा हि=प्रतिभा हि, कवेः=कवयितुः, अव्युत्पत्तिकृतम्=बहुज्ञताऽभावकृतं अशेषं दोषं=कृत्स्नं रसापकर्षकं दोषं, आच्छादयति=तिरोधत्ते।

तदाह—तदेव वदति—

कवेः शक्त्या अव्युत्पत्तिकृतो दोषः संव्रियते, तस्य "यस्तु अशक्तिकृतो दोषः" स झगिति एव अवभासते इत्यन्वयः।

कवेः, शक्त्या=प्रतिभया अव्युत्पत्तिकृतः=बहुज्ञताऽभावकृतः, दोषः संव्रियते=आच्छाद्यते, किन्तु तस्य कवेः, यः अशक्तिकृतः=प्रतिभाऽभावकृतः दोषः, स, झगिति एव=झटित्येव अवभासते=स्फुरति।

अत्र शक्तिः कारणरूपा, प्रतिभा तु तत्कार्यं कथं शक्त्या प्रतिभया ग्रहणमिति शंकां निरस्यति—शक्तिशब्दः=शक्तिपदं, उपचरितः, कार्यकारणाभेदप्रतिपादिकया शुद्धया लक्षणया युक्तः, प्रतिभाने=प्रतिभार्थे वर्त्तते, शुद्धया लक्षणया शक्त्याः प्रतिभार्थं इति भाव।

अव्युत्पत्तिजन्यो दोषः शक्त्या संव्रियत इत्यस्योदाहरणं दर्शयति—दिग्वासस आलम्बनेन कविः पार्वतीकुमारयोः संवादं निर्दिशति—कुमारः पार्वतीं मातरं पृच्छति—

---

आनन्द के मत में, प्रतिभा एवं व्युत्पत्ति में प्रतिभा श्रेष्ठ है। क्योंकि प्रतिभा कवि की अव्युत्पत्ति से होने वाले सम्पूर्ण दोषों को आच्छादित कर लेती है। जैसाकि कहा गया है—

शक्ति अर्थात् प्रतिभा से कवि की अव्युत्पत्ति से उत्पन्न सभी दोष आच्छादित हो जाते हैं किन्तु अशक्ति से जो दोष उत्पन्न होते हैं वे झट ही प्रतीत होनेलगते हैं।

यहाँ पर शक्ति शब्द का अर्थ शुद्धा लक्षणा से प्रतिभान ही समझना चाहिये। क्योंकि शक्ति से प्रतिभा उत्पन्न होती है। अतः जन्य जनक के

**एतत्किं शिरसि स्थितं मम पितुः ? खण्डं सुधाजन्मनो**
**लालाटं किमिदं ? विलोचनमिदं, हस्तेऽस्य किं ? पन्नगाः।**
**इत्थं क्रौञ्चरिपोः क्रमादुपगते दिग्वाससः शूलिनः**
**प्रश्ने वामकरोपरोधसुभगं देव्याः स्मितं पातु वः॥**

---

मम पितुः शिरसि किंस्थितम् = किमस्ति ? पार्वतीउत्तरति-सुधाजन्मनः = चन्द्रमसः खण्डं = भागः । पुनः पृच्छति—लालाटं = ललाटस्थं इदं किम् ? उत्तरति,—इदम् विलोचनम् = नेत्रम् । पुनःकुमारः पृच्छति—अस्य = पितुः हस्ते किम् ? उत्तरति—पन्नगाः = सर्पाः । इत्थं = अनेन प्रकारेण क्रौञ्चरिपोः = कुमारस्य, दिग्वाससः = दिगम्बरस्य, शूलिनः शिवस्य, सम्बधिनि प्रश्ने, क्रमाद् उपगते = अन्यानावृताच्छाद्यावयवविषयके स्थिते, पार्वत्याः स्मितमेव उत्तरं वः पातु । कीदृशं स्मितम्, वामकरोपरोधसुभगं = वामकरेण य उपरोधस्तेन सुभगं = मनोहरम् । लज्जाया अनुभावप्रतिपादकं पदमिदम् । अत्रोत्तरस्य वाच्यवृत्त्यनालिङ्गितत्वेन कमपि चमत्कारमापादयतोऽवस्थानं कविप्रतिभां प्रकर्षयति । अत्र जगतां पित्रोः पार्वतीपरमेश्वरयोरालम्बनं विधाय हास्य-मुपनिबध्नतः कवेरुचितानुचितविवेकात्मिकाया व्युत्पत्तेरभावजन्योऽपि दोष उक्तिवैचित्र्येण प्रतिभयाऽऽच्छाद्यते ।

---

तादात्म्य में शुद्धा लक्षणा होती है। यह उदाहरण प्रतिभा की श्रेष्ठता में दर्शनीय है—कुमार कार्तिकेय एवं पार्वती के प्रश्नोत्तर के सन्दर्भ में कुमार कार्तिकेय पूछता है कि—

मेरे पिता के शिर पर क्या है ?

पार्वती कहती है कि यह सुधांशु का एक भाग है।

कुमार फिर प्रश्न करता है कि यह ललाट पर क्या है ?

उत्तर--यह नेत्र है।

प्रश्न—यह हाथ में क्या है ?

उत्तर—ये सर्प हैं।

इस प्रकार नंगे शूली शंकर के सम्बन्ध में कुमार के क्रमशः अन्य प्रश्नों के उत्तर में देवी का वह मन्दहास आप की रक्षा करे जो बायें हाथ के आच्छादन से मनोहर हैं।

'व्युत्पत्तिः श्रेयसी' इति मङ्गलः॥ सा हि कवेरशक्तिकृतं दोष-माच्छादयति। तथा हि—

कवेः संव्रियतेऽशक्तिर्व्युत्पत्त्या काव्यवर्त्मनि।
वैदग्धीचितचित्तानां हेया शब्दार्थगुम्फना॥

व्युत्पत्तिर्यथा—

कृतः कण्ठे निष्को नहि, किमुत तन्वी मणिलता ?
कृशं लीलापत्रं श्रवसि निहितं कुण्डलमुचि।

---

व्युत्पत्तिः = बहुज्ञता, शास्त्रज्ञता उचितानुचितविवेको वा श्रेयसी = श्रेष्ठेति मङ्गलमतम् सा हि = व्युत्पत्तिर्हि, कवेः अशक्तिकृतं = अशक्तिजन्यं, दोषं, अच्छादयति = तिरोधत्ते। तथा हि—

काव्यवर्त्मनि वैदग्धीचितचित्तानां = ( कृते ) शब्दार्थ गुम्फना हेया, (अतः) कवेः व्युत्पत्त्या अशक्तिः संव्रियते इत्यन्वयः।

काव्यवर्त्मनि = काव्यमार्गे, वैदग्धीचितचित्तानां = नैपुणीनिष्ठमनसाम् भावकानां कृते, शब्दार्थगुम्फना = अनुकुलानुप्रासादिमात्रगुम्फना, प्रतिभोपारूढैककाल्पनिकार्थसंयोजना, च हेया = अग्राह्या, त्याज्या वा। न खलु कश्चन निपुणः शास्त्रदृशाऽनालोचितोचितानुचितार्थानुकूलशब्दगुम्फनायां मात्रप्रतिभाप्रसूतायां रमते इति भावः। (अतः) कवेः = कवयितुः, अशक्तिः=शक्त्यभावः, व्युत्पत्या= उचितानुचितविवेकफलाया बहुज्ञताया सन्निधानेन संव्रियते = आच्छाद्यते।

व्युत्पत्तिर्यथा—

संभोगशृङ्गारानुकूलनेपथ्यवर्णनात्मिकया व्युत्पत्याऽशक्तिकृतस्य दोषस्य संवरणं निर्दिशति—

निधुवनविलासे समासन्नीभूते, वनितया कण्ठे निष्कः नहि कृतः किमुत, तन्वीमणिलता (कृता), कुण्डलमुचि श्रवसि कृशं लीलापत्रं निहितम्, चित्रं कौशेयं न, तु अवदातं वसनं वसितम्।

---

मङ्गल के मत में बहुज्ञता रूप व्युत्पत्ति ही श्रेष्ठ है। इनके मत में व्युत्पत्ति, अशक्ति से उत्पन्न सभी दोषों को ढक देती है जैसा कि कहा गया है—

काव्यमार्ग में विदग्धता से पूर्ण हृदय वालों की दृष्टि में शब्द एवं अर्थों की योजनामात्र हेय है त्याज्य है। अतः व्युत्पत्तिपूर्वक कवि मार्ग में प्रस्थान उचित है। व्युत्पत्ति से कवि के शब्दार्थगुम्फना रूप शक्ति के अभाव से उत्पन्न दोष, छिप जाते हैं। जैसे प्रस्तुत श्लोक में—

न कौशेयं चित्रं वसनमवदातं तु वसितं
समासन्नीभूते निधुवनविलासे वनितया ॥

'प्रतिभाव्युत्पत्ती मिथः समवेते श्रेयस्यौ' इति यायावरीयः। न

---

निधुवनविलासे = सुरतोत्सवे, समासन्नीभूते = समुपस्थिते आसन्ने, वा वनितया = कामिन्या गाढरतौ प्रत्यवायापादकवेषभूषापरित्यागपूर्वकमनुकूलवेषभूषादिपरिग्रहः कृतः इति कृत्वा, कण्ठे = गले, निष्कः = अष्ठोत्तशतसुवर्णमुद्रानिर्मितो गुरुर् हारः, नहि कृतः = न धृतः। "साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले, दीनारेऽपि च निष्कोऽस्त्री" इत्यमरः। किमुत = अपि तु, तन्वी=कृशा, सूक्ष्मा मणिलता = रत्नलता, निहिता। कुण्डलमुचि = गुरुकुण्डलत्यक्ते, कुण्डलं परित्यज्येत्यर्थः श्रवसि = कर्णे कृशं = सूक्ष्मं लीलापत्रं निहितम् = धृतम्। निष्कत्यागेन, समाश्लेषे प्रत्यवायनिरास, कुण्डलत्यागेन, कर्णमूलकपोलाक्षिकोणचुम्बनाश्लेषादौ प्रत्यवायनिरासो दर्शितः। चित्रं = अनेकवर्णं, कौशेयं = कृमिकोषजन्यं बहुमूल्यं पट्टाम्बरं न वसितं = नोपधृतं, अपि तु अवदातं = शुभ्रं, वसनं = तनु कार्पासकं वस्त्रं, वसितम्। अत्र निधुवनोपयोगिनेपथ्यविधावुचितानुचितविवेकात्मिकाया व्युत्पत्तेर्निबन्धनमभिधयैवाखिलपदार्थनिवेदनपुरःसरं प्रदर्शितम्। नात्र किमपि प्रातिभं निबन्धनम्। कृ-कण्ठ-ष्क-स्त्रादिवर्णोपादानात्, सम्भोगरसानुकूलानुभावसंचारिव्यञ्जकपदशून्यविभावमात्रापादकपदविन्यासात् नात्र सहृदयः निष्प्रतिबन्धः सम्भोगश्रृङ्गारमनुभवितुं पारयिष्यति। तथापि यथोचितवेषादिविन्यासः सहृदयानपि न भातीति न अतः व्युत्पत्तिः प्रतिभापेक्षया श्रेयसी इति भावः।

अथात्रविषये स्वमतं प्रकाशयति—प्रतिभाव्युत्पत्ती = उभेऽपि, मिथः =

---

प्रियतम के साथ रतिक्रीड़ा को आसन्न देख प्रियतमा ने गले से हँसुली उतार कर पतली रत्नमाला पहन ली, कानों में लटकते हुए कुण्डलों को उतारकर पतले लीला पत्र ( पुष्प या पत्तों के कनफूल ) पहन लिये, और वेलबूटे वाली रेशमी साड़ी उतार कर स्वच्छ धुली हुई साधारण साड़ी पहन ली।

यायावर राजशेखर का मत है कि दोनों प्रतिभा एवं व्युत्पत्ति मिलकर ( कविता में ) श्रेयस्कर होती है। जैसे अवयव संस्थानरूप रूपसम्पत्ति, बिना

खलु लावण्यलाभादृते रूपसम्पदृते रूपसम्पदो वा लावण्यलब्धिर्महते सौन्दर्याय । उभययोगो यथा--

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।

---

परस्परं, समवेते=सङ्गते, श्रेयस्यौ=प्रशस्यतरे इति यायावरीयः=यायावरमतम् इत्यर्थः । तत्र दृष्टान्तं निदर्शयति=न खलु इति । निश्चयेनेदम्=यत्, महते सौन्दर्याय=परमसौन्दर्यप्रकर्षाय, न केवलं लावण्यं भवति न च केवला रूपसम्पत् । अपि तु उभयोः संयोग एव । अत उच्यते—नखलु, लावण्यलाभात्= अवयवसंस्थानाभिव्यंग्यतरलतरतेजोविशेषात् ऋते=विना, रूपसम्पत्= अवयवसंस्थानसम्पत्, रूपसम्पदो ऋते=अवसंस्थानसम्पदं विना लावण्यलब्धिः= तरलतरतेजोविशेषोपलब्धिः, महतेसौन्दर्याय सौन्दर्यप्रकर्षायेति ।

उभययोगः प्रतिभाव्युत्पत्त्योर्योगो यथा—जङ्घेति ।

पद्यमिदं बाणभट्टविरचितस्य चण्डीशतकस्येति कतिपयैर्विद्वद्भिर्लिख्यते किन्तु चण्डीशतके मया न लब्धम् ।

भर्तुः नृत्यानुकारे निजतनुषु अच्छलावण्यवापी सम्भूताम्भोजशोभां विदधत् जङ्घाकाण्डोरुनालः नखकिरणलसत् केसरालीकरालः प्रत्यग्रालक्तकाभाप्रसरकिसलयः मञ्जुमञ्जीरभृङ्गः अभिनयाद्दण्डपादः जयति इत्यन्वयः । भर्तुः= महेश्वरस्य, नृत्तप्रवृत्तस्य, नृत्यानुकारे=नृत्येन योऽनुकारः=अनुकरणम्, "नृत्यनृत्तयोर्भेदस्तु", "पदार्थाभिनयो नृत्यं नृत्तंताललयाश्रयम् । पूर्वं पदार्थाभिनयो

---

लावण्य लाभ (तरलतरतेजोविशेष) के तथा लावण्य प्राप्ति, बिना अवयव संस्थान रूप रूपसम्पत्ति के उत्कृष्ट आकर्षक नहीं होते। उसी प्रकार प्रतिभा एवं व्युत्पत्ति दोनों के विना जुड़े, काव्य लोकोत्तर सौन्दर्य के लिए नहीं होता ।

प्रतिभा एवं व्युत्पत्ति दोनों से युक्त जैसा कि यह पद्य—

नृत्तप्रवृत्त पति का नृत्य से किए जाने वाले अनुकरण में भवानी का ऊर्ध्व उत्क्षिप्त पाद जिसे दण्डपाद कहते हैं वह सर्वोत्कृष्ट है। जो दण्डपाद, निर्मल जलरूपी लावण्यवापी में उत्पन्न कमल की शोभा को अपने अवयवों में, अभिनय से उत्पन्न कर रहा है। क्योंकि उस दण्डपाद के जङ्घादण्ड ही महान् नाल है,

**भर्तुर्नृत्यानुकारे जयति निजतनुस्वच्छलावण्यवापी-**
**सम्भूताम्भोजशोभां विदधदभिनयाद्दण्डपादो भवान्याः ॥**

मार्गः, देशी तथापरमित्यभियुक्तोक्त्या अनुकाराननुकारात्मकत्वं बोध्यम् ।" तस्मिन्, नृत्यानुकारे "भर्तुर्नृत्तानुकारे" इति पाठे नृत्तस्य भर्तुरितिपदेनान्वयात् पदैकदेशान्वयो दुर्निवारः स्याद् इति नृत्यानुकार एव समीचीनः । निजतनुषु = निजावयवेषु, अच्छलावण्यवापीसम्भूताम्भोजशोभा = अच्छं यत् लावण्यम् तस्य वापी=सरसी, तस्यां सम्भूतस्य अम्भोजस्य शोभां, विदधत् = कुर्वन् जनयन्नित्यर्थः । अभिनयाद् दण्डपादः = अभिनयहेतुकः ऊर्ध्वोत्क्षिप्तः पादः, इत्यन्वयक्रमेणान्वयः । अच्छलावण्यवापीत्यत्रैकदेशविवर्तित्वं बोध्यम् जलस्थानीय-लावण्यमात्रस्योपादानात् । निजतनुषु अम्भोजशोभाजनने हेतुत्वेन विशेषणचतुष्टय-स्य निर्देशः, जङ्घेति । जङ्घाकाण्डोरुनालः = जङ्घाकाण्ड एव उरुः = महान् नालो यस्य सः, नखानां किरणा एव लसन्तः केसराः = किञ्जल्काः, तेषा-माली = पङ्क्तिः, तया करालः = नतोन्नतः, तथा प्रत्यग्रः = नूतनः यः अलक्तकः = यावकरसः, तस्य आभा = कान्तिः, तस्याः प्रसराः एव किसलयानि = नवद-लानि, यस्य सः । एवम्, मञ्जुमञ्जीरः, = सुन्दरनूपुरमेव, भृङ्गो यस्य सः तादृशः, अभिनयात् = आङ्गिकाभिनयात् दण्डपादः = ऊर्ध्वोक्षिप्तः पादः "प्रसह्योर्ध्वीकृतः पादो दण्डपादोऽभिधीयते" इति सङ्गीतरत्नाकरः । जयति = सर्वोत्कर्षेण वर्तते ।

अत्र विपूर्वस्य धाधातोः करणार्थकत्वाद् दधदित्यस्य धारणार्थेऽवाचकत्वम्, तथा च निजतनुस्वच्छलावण्यवापीत्यादौ निजपदस्य भवान्या योगोऽभिप्रेतः

---

नखकिरणें ही शोभमान केसर की पंक्तियाँ है तत्काल लगाए गए महावर की आभायें किसलय हैं तथा मनोहर ( शब्द करता हुआ ) नूपुर ही भ्रमर है ।

विशेष = प्रस्तुत पद्य में मम्मट ने अवाचकत्व एवं अमवन्मतयोगत्व रूप दो दोषों को दिखलाया है । उनका कहना है धातु उपसर्ग के बल से अपने धात्वर्थ को छोड़ कर अन्यार्थक हो जाती है अतः "विदधत्" वि उपसर्गपूर्वक धा धातु का अर्थ धारण न होकर करण होता है जो कि यहाँ अविवक्षित है । क्योंकि यहाँ शोभा का धारण अर्थ विवक्षित है न कि करण ।

किन्तु स तथा न घटते। निजपदार्थस्य प्रधानक्रियान्वयिकारकपदार्थान्विताद् दण्डपादस्य, निजपदार्थेनान्वयः प्रतीयते, इत्यभवन्मतयोगत्वमिति यद् दोषद्वयं दर्शितम् तद्द्वयस्याप्यतथात्वात् न दोषपङ्कलेशोऽपि। चेदत्रदोषः स्यात्तदानीं ग्रन्थकारस्यात्र प्रतिभाया योगस्य कथनमसङ्गतं स्यात्। यदत्र रूपकं निबद्धं तदपि प्रतिभाशाणोल्लिखितं रत्नमिव निरवद्यम्। बहुज्ञतारूपोचितानुचितविवेकफला-व्युत्पत्तिरपि नृत्तातिरिक्तनृत्यस्य, दण्डपादस्य च पारिभाषिकत्वात् च्युतसंस्कृति प्रभृतिदोषविरहितत्वादस्य काव्यस्य, निरवद्यतैव। निरवद्यश्च पतिव्रताशिरोमणे-र्भगवत्या भर्तुरनुकारः। एवञ्चेदम् प्रतिभाव्युत्पत्त्योः समरसत्वाद् उत्कृष्टतरम्।

---

तथा निजतनुस्वच्छलावण्यवापी ''...'' यहाँ पर निज पद का भवानी से सम्बन्ध होना चाहिए, जो नहीं हो पाता। क्योंकि निजपदार्थका प्रधान कारक-कार्थ से ही अन्वय हो सकता है। न कि अप्रधान से। षष्ठ्यन्त पदोपात्त भवानी का दण्डपाद के साथ सम्बन्ध होने से क्रिया के साथ सम्बन्ध नहीं होता। अतः प्रधान क्रिया जयति के साथ दण्डपाद का अन्वय होने से प्रधान कारक दण्डपाद का ही निजार्थ के साथ सम्बन्ध होना चाहिए। सो नहीं होता। इसलिए यहाँ दो दोष अवाचकत्व एवं अभवन्मतयोगत्व बनते हैं।

इस प्रकार दोषों की सम्भावना से यह पद्य व्युत्पत्तियुक्त तो कहा जा सकता है किन्तु प्रतिभा युक्त नहीं। बल्कि ''विदधत्'' पद के निवेश में अव्युत्पत्ति, तथा निजपदार्थके निवेशसे अप्रतिभा, दोनों झलकती है। इतना ही नहीं मम्मट से गृहीत पाठ भर्तुर्नृत्तानुकारे, तथा विदधदभिनवो'' से भर्ताके साथही अननु-कारात्मक नृत्तका सम्बन्ध होनेसे पदार्थैकदेशान्वयित्व तथा अभिनवमें अधिक-पदत्व भी दीख पड़ता है इस प्रकार दोषों का पुञ्ज यह श्लोक राजशेखर के मत में प्रतिभाव्युत्पत्तिपूर्ण कैसे हो सकता है ?

काव्यमीमांसामें, भर्तुर्नृत्यानुकारे, (नृत्येनानुकारे) तथा अभिनवके स्थान पर अभिनयात् पाठ मिलनेसे पदार्थैकदेशान्वयित्व एवं अधिकपदत्व दोनों दोष दूर हो जाते हैं। ''निजतनुस्वच्छ'' के स्थानपर यदि निजतनुष्वच्छ पाठ कर लिया जाय तो निजतनुका अन्वय दण्डपादके साथ सुलभ हो जाता है तथा

प्रतिभाव्युत्पत्तिमांश्च कविः कविरित्युच्यते। स च त्रिधा। शास्त्रकविः काव्यकविरुभयकविश्च। "तेषामुत्तरोत्तरीयो गरीयान्" इति श्यामदेवः। "न" इति यायावरीयः। यथा स्वविषये सर्वो गरीयान्। न हि राजहंसश्चन्द्रिकापानाय प्रभवति, नापि चकोरोऽद्भ्यः क्षीरोद्धरणाय। यच्छास्त्रकविः काव्ये रससम्पद विच्छिनत्ति। यत्काव्यकविः

---

प्रतिभाव्युत्पत्तिमांश्च कविः = प्रतिभाव्युत्पत्त्योरुभयोर्गुणयोगे, कविः कविर्भवति, न खलु छन्दोपूरणमात्रेण। कविभेदं लक्षयति स च = कविश्च त्रिधा—(१) शास्त्रकविः (२) काव्यकवि, (३) उभयकविः। श्यामदेवो, तेषूत्तरोत्तरः श्रेष्ठ इति मनुते। यायावरीयश्च निराकुरुते। उत्तरति च, स्वविषये = स्वस्य काव्यनिर्माणविषये, सर्वो गरीयान् = त्रिविधोऽपि कविः श्रेष्ठ एव। शास्त्रकविकाव्यकव्योरेकतरः श्रेष्ठः इति न वक्तव्यम्, यतो हि उभावपि स्वस्वविषये निपुणो भवतः, यथा, राजहंसः चन्द्रिकायानाय = ज्योत्स्नापानाय न प्रभवति अपि तु नीरक्षीरविवेकाय, तथा च चकोरोऽपि चन्द्रिकापानायैव प्रभवति न तु नीरक्षीरोद्धरणाय, एवमेव शास्त्रकविः काव्यरचनायां, रसपम्पदं

---

अनेकार्थक तनुपदका अवयव अर्थ भी किया जा सकता है अतः विदधत्का अर्थ धारण न होकर जनन या करण हो सकता है। अर्थ होगा "वह दण्डपाद सर्वोत्कृष्ट है जो अपने अवयवों में स्वच्छजलरूपीलावण्य की वापी से उत्पन्न कमलकी शोभाको पैदा कर रहा है। अंगुलियाँ दल स्थानीय हैं तथा पञ्चम्यन्त अभिनय पद भी उत्पन्न करने में हेतुत्वेन साभिप्राय हो सकता है। इस प्रकार सभी दोष दूर हो सकते हैं और राजशेखर का मत भी पुष्ट हो सकता है।

इस प्रकार कवि वस्तुतः तभी कवि होता है जब उसमें प्रतिभा एवं व्युत्पत्ति दोनों हों। वह कवि तीन प्रकार का होता है। १—शास्त्रकवि २—काव्यकवि तथा ३—उभयकवि। उनमें शास्त्रकवि से काव्यकवि एवं काव्यकवि से उभयकवि श्रेष्ठ होता है ऐसा श्यामदेव का मत है।

राजशेखर कहते हैं कि नहीं। सभी कवि अपने-अपने विषय में श्रेष्ठ है। क्योंकि न तो राजहंस चन्द्रिकापान में समर्थ हो सकता है और न तो चकोर नीरक्षीरविवेक में ही। अतः राजहंस एवं चकोर जैसे अपने-अपने कार्य में कुशल हैं वैसे ही तीनों कवि भी अपने-अपने विषय में कुशल होते हैं। क्योंकि

शास्त्रे तर्ककर्कशमप्यर्थमुक्तिवैचित्र्येण श्लथयति। उभयकविस्तूभयोरपि वरीयान्यद्युभयत्र परं प्रवीणः स्यात्। तस्मात्तुल्यप्रभावावेव शास्त्र काव्य-कवी। उपकार्योपकारकभावं तु मिथः शास्त्रकाव्यकव्योरनुमन्यामहे। यच्छास्त्रसंस्कारः काव्यमनुगृह्णाति, शास्त्रैकप्रवणता तु निगृह्णाति। काव्य-संस्कारोऽपि शास्त्रवाक्यपाकमनुरुणाद्धि काव्यैकप्रवणतया तु विरुणद्धि।

---

विच्छिनत्ति = रसं न विच्छित्या निवेशयितुं प्रभवति, तथा कर्कशमपि तर्कादि-शास्त्रमुक्तिवैचित्र्येण श्लथयति। एवं च काव्यकविः = रससम्पदा शास्त्रं तर्ककर्क-शत्वतादृशं, श्लथायितुं प्रभवति। अत उच्यते—

काव्ये, शास्त्रकविः रससम्पदं विच्छिनत्ति – रसानुकूलविभावादिसम्पदो-विच्छित्तिमादधाति तथा च शास्त्रे, काव्यकविः तर्ककर्कशं अर्थं श्लथयति शिथिलयति। उक्तिवैचित्र्येण रससम्पदमभिव्यञ्जयितुं प्रवृत्तस्य काव्यकवेः तर्क-कर्कशं शास्त्रीयमर्थं शिथिलयतीत्यर्थः।

वहुगुणयोगः प्रकर्षयेति धिया उभयकविः श्रेयान् इति वक्तुं शक्यते। यतो हि स उभयप्रवीणः स्यात्। किन्तु शास्त्रकाव्ययोः कवी तु तुल्यप्रभावेव। शास्त्रकाव्यकव्योः परस्परमुपकार्योपकारकभावं तु वयं स्वीकुर्महे, यच्छास्त्र-संस्कारः = शास्त्रज्ञानं, काव्यमनुह्लाति = काव्यं संस्कुरुते, किन्तु शास्त्रैकप्रव-णता = शास्त्रमात्रतत्परता, काव्यं निगृह्णाति = निरुणद्धि। काव्यसस्कारोऽपि शास्त्रवाक्यपाकमनुरुणद्धि = शास्त्रवाक्यफलं मधुरोपायेन विनिवद्ध्य शास्त्रमुप करोति, किन्तु काव्यैकप्रवणता = काव्यैकनिपुणता, रसौपयिकविभावादिव्यञ्जन मात्रनिपुणता शास्त्रं, विरुणद्धि = निगृह्णाति।

---

शास्त्रकवि अपने काव्य में रस सम्पत्ति की ( विच्छित्ति ) शोभा का निवेश करता है तथा काव्यकवि शास्त्र में निविष्ठ तर्ककर्कश जटिल अर्थों को अपनी उक्ति की छटा से शिथिल कर देता है। अर्थात् सर्वजनबोध्य बना देता। हाँ उभयकवि को दोनों कवि से श्रेष्ठ कहा जा सकता है क्यों कि उभयकवि शास्त्र एवं काव्य दोनों में परम प्रवीण होता हैं। किन्तु शास्त्रकवि एवं काव्यकवि दोनों का प्रभाव समान ही है। शास्त्रकवि एवं काव्यकवि में परस्पर उपकार्योपकार भाव हम मानते हैं। क्यों कि केवल एकमात्र की प्रवीणता काव्य में बाधक भी हो सकती हैं। जैसा कि शास्त्र संस्कार से काव्य अनुगृहीत होता है। किन्तु मात्रशास्त्र का संस्कार काव्य को प्रतिबन्धित कर देता है। वैसे ही काव्यसंस्कारक

तत्र त्रिधा शास्त्रकविः। यः शास्त्रं विधत्ते, शास्त्रे काव्यं संविधत्ते, योऽपि काव्ये शास्त्रार्थं निधत्ते। काव्यकविः पुनरष्टधा। तद्यथा—रचनाकविः, शब्दकविः, अर्थकविः, अलङ्कारकविः, उक्तिकविः, रसकविः, मार्गकविः, शास्त्रार्थकविरिति। तत्र रचनाकविः—

लोलल्लाङ्गूलवल्लीवलयितबकुलानोकहस्कन्धगोलै-
र्गोलाङ्गूलैर्नदद्भिः प्रतिरसितजरत्कन्दरामन्दिरेषु।

---

शास्त्रकविभेदं दर्शयति। शास्त्रककविस्त्रिधा, प्रथमस्तु केवलं शास्त्रं निर्माति द्वितीयस्तु शास्त्रे रसाद्यनुबंधनेन काव्यत्वं संविधत्ते। तृतीयस्तु काव्ये शास्त्रार्थं पिनद्धि। काव्यकविभेदं दर्शयन्नाह—काव्यकविर् अष्टधा—

१—रचनाकविः २—शब्दकविः ३—अर्थकविः ४—अलङ्कारकविः ५—उक्तिकविः ६—रसकविः ७—मार्गकविः ८—शास्त्रार्थकविरिति।

तत्र रचनाकविर्यथा—लोलल्लाङ्गूलेति। येन वेलाम् आलङ्घ्य लोलल्लाङ्गूलवल्लीवलयितवकुलानोकहस्कन्धगोलैः नदद्भिः गोलाङ्गूलैः प्रतिरसितजरत्कन्दरामन्दिरेषु षण्डेषु उद्दण्डपीण्डीतगरतरलकाः उत्तालतल्लस्फुटितपुटकिनीवन्धव. गन्धवाहा प्रापिरे इत्यन्वयः।

---

भी शास्त्र के वाक्यपाक में सहयोगी होता है किन्तु मात्र काव्य का संस्कार शास्त्र के वाक्यपाक का विरोधी होता है।

इन कवियों में शास्त्रकवि तीन प्रकार का होता है।

(१) जो केवल शास्त्र का निर्माण करता है।

(२) जो शास्त्रों में गुणालङ्कारादि काव्यार्थ का निवेश करता है तथा—

(३) जो काव्य में शास्त्रार्थ का निवेश करता है।

काव्यकवि आठ प्रकार का होता है।

१—रचनाकवि २—शब्दकवि ३—अर्थकवि ४—अलङ्कारकवि ५—उक्तिकवि ६—रसकवि ७—मार्गकवि ८—शास्त्रार्थकवि।

उनमें रचनाकवि का उदाहरण जैसे—

समुद्रतट पारकर जिसने अपने शिविर में पिण्डीखर्जूर को कम्पित करने वाले, पूर्णविकसित कमलिनियों के परागों से सुगन्धित पवन का सेवन किया। जो शिविर, चञ्चल पुच्छ रूपी लताओं से मौलिश्री वृक्ष विशेष की शाखाओं को

**षण्डेषूद्दण्डपिण्डीतगरतरलकाः प्रापिरे येन वेला-**
**मालङ्घ्योत्तालतल्लस्फुटितपुटकिनीबन्धवो गन्धवाहाः ॥**

येन = राज्ञः वेलां = मर्यादातटं, आलङ्घ्य = समान्ताद् लङ्घयित्वा षण्डेषु वायवो निषेविताः। कीदृशेषु षण्डेषु, लोलद् = चञ्चलं यत् लाङ्गूलं = पुच्छं तदेव वल्ली = लता, तया वलयितः = मण्डलितः, वकुलानोकहानां = वकुल-वृक्षाणां स्कन्धगोलः = मूलाच्छाखावधिप्रदेशः यैस्तैर् नदद्भिः = शब्दं कुर्वद्भिः, गोलाङ्गूलैः = कृष्णमुखैर्वानरैः प्रतिरसितजरत्कन्दरामन्दिरेषु = प्रतिध्वनित जीर्णगुहामन्दिरेषु, प्रतिरसितानि जरन्त्यः कन्दरा एव मन्दिराणि येषु तेषु, षण्डेषु शिविरेषु "निवेशः शिविरं षण्डे' इत्यमरः। उदण्डपिण्डीतगरतरलकाः = (कीदृशा वायवः) उद्दण्डानां, पिण्डीतगराणां = पिण्डखर्जूराणां तरलकाः = कम्प-यितारः, उत्तालतल्लानां = विकासेनोच्छ्तितलप्रदेशानां स्फुटितानां = विकसि-तानां पुटकिनीनां = पद्मिनीनां बन्धवः = सम्पर्किणः गन्धवाहाः = वायवः, प्रापिरे = निषेविताः, प्राप्ताः।

अत्र लाङ्गूलवलयितवकुलैर्नदद्भिर्गोलाङ्गूलः प्रतिरसितजरत्कन्दरामन्दिरेषु षण्डेषु उद्दण्डपिण्डीतगरतरलकाः, पुटकिनीवन्धवो गन्धवाहा वेलामालम्ब्य येन प्रापिरे, इत्यतोऽधिकानां लोलद्वल्लीप्रभृतिपदानामपुष्टार्थानामपि अनुप्रासाय छन्दःपूरणाय चार्थानुगुण्येन कविना रचितत्वाद् रचनाकवेरुदाहरणमिदम्।

---

लपेटे हुए एवं चीत्कार करते हुए कृष्णमुख वन्दरों की, प्रतिध्वनि से अपने मध्य-भाग को पूरित कर रहा था।

यहाँ कवि ने कुछ अधिक पदों को, जो अपुष्टार्थत्व दोष से गृहीत होते हैं, उनका निवेश केवल अनुप्रासकी छटा के लिए क्रिया है। यहाँ की लोलद्वल्ली आदि पदों की कोई विशेषाधानता प्रतीत न होने से, इसे वाक्य पल्लव भी कहा जाता है यह कवियों के लिए गर्हित भी है। यहाँ पर कोई रसविशेषादि का निवेश न होने से केवल अनुप्रासों की छटा दिखलाई गयी है अतः यह रचनाकवि का काव्य कहा जाता है।

शब्दकवि तीन प्रकार का होता हैं। १-नामार्थकवि २-आख्यातार्थकवि ३-नामाख्यातार्थकवि। द्वन्द्व के अन्त में स्थित पद सभी पूर्वपदों में अन्वित होता है इस सिद्धान्त से अर्थ का सर्वत्र अन्वय आवश्यक है। उदारण में नामकवि

त्रिधा च शब्दकविर्नामाख्यातार्थभेदेन । तत्र नामकविः—

विद्येव पुंसो महिमेव राज्ञः, प्रज्ञेव वैद्यस्य, दयेव साधोः ।
लज्जेव शूरस्य मृजेव यूनो विभूषणं तस्य नृपस्य सैव ॥

---

न चात्र लोलद्वल्लीप्रभृतीनां विशेषाधायकत्वं प्रतीयते इत्यत्र पल्लवप्रतिष्ठा मात्रम् यदुक्तम्—

वाक्यप्रतीतिमात्रार्थमुपात्तेषु पदेषु यः ।
उपस्कारः पदैरन्यैः पल्लवं त प्रचक्षते ॥
अपल्लवं तु यद्वाक्यं कविभ्यस्तत्र रोचते ।
प्रयुज्यते तथाभूतमुदीच्यैः कविगर्हितम् ॥ इति ॥

द्वितीयं शब्दकविं विभजते—शब्दकविस्त्रिधा—

१—नामार्थकविः, २—आख्यातार्थकविः, ३—नामाख्यातार्थकविः । द्वन्द्वान्ते-श्रूयमणं पदं सर्वैरभिसम्बध्यते इति यायाद् अर्थस्य सर्वत्र सम्बधः । तत्र नामकविः =नामार्थकविरितिभावः । यथा— विद्येव इति ।

पुंसः विद्याइव, राज्ञो महिमा इव, वैद्यस्य प्रज्ञा इव, साधोः दया इव, शूरस्य लज्जा इव, यूनो मृजा इव, तस्य नृपस्य सा एव विभूषणम् इत्यन्वयः । यूनः = वयस्कस्य, मृजा = शुद्धिरिव, अन्यत्रार्थः स्पष्ट एव । अत्रविद्यादयः सर्वे नामशब्दाः प्रयुक्ता नत्वेकोऽपि आख्यातशब्द इति नामार्थकविकाव्यस्योदाहरणमिदम् ।

आख्यातकविर्यथा—उच्चैस्तरामिति—

क्षीरसमुद्रादमृते मथ्यमाने सति सर्वैर्देवैरमृतं लप्स्यत इति वृहस्पतेर्वाचमाकर्ण्य देवानां क्रियाया वर्णनम् ।

---

आदि जो कहे गये हैं उन्हें नामार्थकवि समझना चाहिए । चूंकि अर्थ को प्राचीनोंने काव्यमें गुणीभूत माना है इसलिए केवल नामकवि से उदाहरण दिया गया है ।

पुरुषकी विद्या, राजाकी महिमा, वैद्यकी प्रज्ञा, साधुकी दया, शूरकी लज्जा तथा युवाकी शुद्धि जैसे विभूषण होती है वैसेही वह नायिका उस राजाकी विभूषा थी । यहाँ पर केवल नामार्थ विद्यादि का प्रयोग होते से यह नामार्थकवि है ।

आख्यातकविर्यथा—

उच्चैस्तरां जहसुराजहृषुर्जगर्जु-
राजघ्निरे भुजतटीनिकरैः स्फुरद्भिः।
सन्तुष्टुवुर्मुमुदिरे बहु मेनिरे च
वाचं गुरोरमृतसम्भवलाभगर्भाम् ॥

नामाख्यातकविः—

हतत्विषोऽन्धाः शिथिलांसबाहवः स्त्रियो विषादेन विचेतना इव ॥

---

अमृतसम्भवलाभगर्भाम् = अमृतस्य = सुधायाः, यः सम्भवः = उत्पत्तिस्तस्य लाभः = प्राप्तिः गर्भे = आभ्यन्तरे यस्या = सा ताम् गुरोः = वृहस्पतेः वाचम् = वाणीम्, (आकर्ण्येति आक्षिप्य) उच्चैस्तरां, जहसुः = अट्टहासं चक्रुः, आजहृषुः = हृष्टवन्तः जगर्जुः = गर्जितवन्तः, स्फुरद्भिः = चञ्चलैः, भुजतटीनिकरैः = भुजाग्रभागैः करैः, अथवा तटीनि इत्यत्र तटानि इति पाठे, करैः = हस्तैः भुजतटानि = भुजमूलभागान् आजघ्निरे = ताडितवन्तः, सन्तुष्टुवुः = संतुतुषुः, मुमुदिरे = मुदितवन्तः, बहुमेनिरे = बहु मानितवन्तः।

अत्र प्रायः सर्वे आख्यातशब्दा एव प्रयुक्ताः।

नामाख्यातकविस्तु—नामाख्यातयोरुभयोः समप्रयोगे नामाख्यातकविकाव्यं भवति। यथा—

विषादेन हतदिवषः अन्धाः शिथिलांसबाहवः स्त्रियः विचेतनाइव न चुक्रुशुः, न रुरुदुः न सस्वनुः आलिखिता इव क्षणं न चेलुः। इत्यन्वयः।

विषादेन = प्रत्यग्रजातपतिनिधनशोकेन, हतत्विषः = अपगतकान्तयः,

---

आख्यातकवि का उदाहरण—

समुद्र मन्थनके समय वृहस्पतिकी अमृतप्राप्ति सम्बन्धी वाणी सुनकर देवता गण अट्टहास किए, प्रसन्न हुए, गर्जना किये, फड़कती भुजाओं से अपने ही शरीर पर आनन्द से आघात करने लगे, स्तुति किए, प्रसन्न हुए तथा अपने को बहुत सम्मानित समझने लगे!

नामाख्यात कविका उदाहरण जैसे—

पतिमरण, सुनकर कान्तिरहित, विमूढ़, शिथिल कन्धों एवं बाहुओंवाली

**न चुक्रुशुर्नो रुरुदुर्न सस्वनुर्न चेलुरासुर्लिखिता इव क्षणम् ॥**

**अर्थकविः—**

**देवी पुत्रमसूत, नृत्यत गणाः, किं तिष्ठतेत्युद्भुजे**
**हर्षाद् भृङ्गिरिटावुदाहृतगिरा चामुण्डयाऽऽलिङ्गिते ।**

---

अन्धाः = किङ्कर्तव्यविमूढाः, शिथिलांसबाहवः = शिथिलस्कन्धभुजलताः, विचेतना इव = गतचेतना इव, स्त्रियः, न चुक्रुशुः = न क्रोशितवत्यः, न रुरुदुः = न रुदितवत्यः, न सस्वनुः = न स्वनितवत्यः, आलिखिता इव = चित्रलिखिता इव, क्षणं = क्षणमात्रं, न चेलुः = न चकम्पिरे इत्यर्थः ।

अत्र हतत्विषः इत्यादिनामपदानां, चुक्रुशुरित्याद्याख्यातपदानाञ्च समप्रयोगादयं नामाख्यातकविः ।

रचनाशब्दकव्योरनन्तरम् अर्थकविं प्रस्तौति—अर्थकविर्यथा—रसभावादिनिरपेक्षमर्थमात्रनिबन्धनोऽर्थकविर्भवति यथा—देवीपुत्रमसूत इति ।

देवी पुत्रं असूत, गणाः नृत्यत, किं तिष्ठत इति उदाहृतगिरा चामुण्डया हर्षाद् उद्भुजे भृङ्गिरिटौ आलिङ्गिते सति तयोः जितदेवदुन्दुभिः घनध्वानप्रवृत्तिः अन्योन्याङ्कनिपातजर्जरजरत्स्थूलास्थिजन्मा रवः वः पायात् इत्यन्वयः ।

देवी = भगवती पार्वती, पुत्रं = कार्तिकेयं सुतम्, असूत = प्रसूतवती हे गणाः ! = प्रमथादिगणाः !, यूयं, नृत्यत = नृत्यं कुरुत, किं = कथमुदासीना इव, तिष्ठत इति, उदाहृतगिरा = उदाहृता = उक्ताः, गीः = वचः यया सा, उक्तवचसा,

---

तथा विषादसे संज्ञाहीन सी स्त्रियाँ अकस्मात् न कोस सकीं, न रो सकीं, न शब्द कर सकीं, न चल सकीं, बल्कि एक क्षणभर लिखित सी एकटक रह गई ।

इसमें नाम एवं आख्यात (क्रिया) का तुल्य प्रयोग होनेसे यह नामाख्यातकवि है ।

अर्थ कविका उदाहरण जैसे—

"देवी पार्वती ने पुत्र का जन्म दिया है, अतः हे गण ! तुम लोग निर्भर नृत्य करो, इस प्रकार क्यों उदासीन से खड़े हो" इस प्रकार कहनेवाली चामुण्डा से, ऊपर हाथ उठाए हुए भृङ्गिरिटी के समालिङ्गित होने पर, उन दोनों के परस्पर अङ्ग घर्षणसे उत्पन्न जर्जर जीर्ण स्थूल हड्डियों की ध्वनि आप लोगों की रक्षा करे, जो देवताओं की दुन्दुभी के गम्भीर ध्वनिको तिरस्कृत कर दी है ।

**पायाद्वो जितदेवदुन्दुभिघनध्वानप्रवृत्तिस्तयो-**
**रन्योन्याङ्कनिपातजर्जरजरत्स्थूलास्थिजन्मा रवः ॥**

द्विधाऽलङ्कारकविः शब्दार्थभेदेन । तयोः शब्दाऽलङ्कारः—

**न प्राप्तं विषमरणं, प्राप्तं पापेन कर्मणा विषमरणं च ।**

---

चामुण्डया देव्या, उद्धृते = नर्तनायोद्धृतनाः, भृङ्गिरिटौ = भृङ्गिणि, दर्पात्, आलिङ्गिते = आश्लिष्टे सति, तयोः = चामुण्डाभृङ्गिरिट्योः, अन्योन्यं = परस्परं अङ्गानां निपातेन = आश्लेषेण, जर्जरजरेभ्यः = अतिजर्जरेभ्यः स्थूलेभ्यः = पृथुलेभ्यः, अस्थिभ्यः = कङ्कालेभ्यः जन्म = उत्पत्तिर्यस्य तादृशः, जितदेवदुन्दुभिघनध्वानः = जिता देवदुन्दुभीनां = देववाद्यविशेषाणां, घनाः = निविडाः ध्वानाः = रवा येन तथाभूतः रवः = ध्वनिः वः = युष्माकं पायात् = रक्षेत् ।

अत्रार्थत्वेन परिगृहीतस्य चामुण्डाभृङ्गरिटिपरिष्वङ्गसंघटितपरस्परहृदयास्थिजन्मनो रवस्य, देवी पुत्रमसूत इत्यादिभिरुपस्कृतत्वादर्थमात्रनिबन्धनपरस्यार्थकवेरिदं काव्यम् ।

अलङ्कारकविं लक्षयति–शब्दार्थभेदेन अलङ्कारस्य द्विविधत्वाद् अलङ्कारकविर्द्विधा शब्दालङ्कारकविः, अर्थालङ्कारकविश्च । तत्र शब्दालङ्कारकविर्यथा—अनुतप्तस्य कस्याप्युक्तिरियम् —

विषमरणं = विषमं = तुमुलं, रणं = युद्धं न प्राप्तम्, अपितु पापेन = नीचेन, कर्मणा = कृत्येन विषमरणं = विषेण मरणं प्राप्तम् । एवमेव भागीरथ्यां =

---

यहाँपर अर्थरूप में परिगृहीत चामुण्डा एवं भृङ्गरिटिके परस्पर आलिङ्गन से संघटित जीर्ण अस्थियों से उत्पन्न ध्वनिको "देवी ने पुत्र का जन्म दिया है है इत्यादि अर्थों से उपस्कृत होनेके कारण यहाँ अर्थमात्र का निबन्धन समझना चाहिए ।

शब्द एवं अर्थ के भेद से अलङ्कार कवि भी दो प्रकार का होता है । उनमें शब्दालङ्कार कवि का उदाहरण जैसे—

दुःख की बात है कि मैंने विषम अर्थात् विकट सग्राम को नहीं पाया बल्कि अपने पाप कर्मवश विष से मृत्यु प्राप्त की । तथा भागीरथी के तटपर शरीर

न मृतो भागीरथ्यां, मृतोऽहमुपगूह्य मन्दभागी रथ्याम् ॥

अर्थालङ्कारः—

भ्रान्तजिह्वापताकस्य फणच्छत्रस्य वासुकेः ।

---

गङ्गातटे, न मृतः अपितु मन्दभागी = मूढः, रथ्यां = वीथ्यां उपगुह्य = प्राप्य, मृतः ।

अलङ्काराणां शब्दार्थान्वयव्यतिरेकानुविधायित्वेन, विषमरणपदयोः भागीरथ्यामितिपदयोश्च भिन्नार्थयोरप्येकानुपूर्विवर्णोच्चरितत्वाद् यमकम्, शब्दालङ्कारः । विषमरणमिति सार्थकयोः, भागीरथ्यामिति सार्थकनिरर्थकयोः पदयोर्यमकम् बोध्यम् । उक्तञ्च "अर्थे सत्यर्थभिन्नानां शब्दानां च पुनःश्रुतिः यमकम्" इति ।

अर्थालङ्कारो यथा—वीरस्य दर्पोक्तिरियम् ।

भ्रान्तजिह्वापताकस्य फणच्छत्रस्य वासुकेः दंष्टाशलाकादारिद्रयं कर्तुं मे भुजः = योग्योऽस्ति । इत्यन्वयः । भ्रान्तजिह्वापताकस्य = भ्रान्ता = स्फुरन्ती जिह्वा एव पताका यस्य स तस्य, फणच्छत्रस्य = फण एव छत्रं यस्य तस्य, वासुकेः, सम्राजः, दष्ट्राशलाकादारिद्रयम् = दंष्ट्रा एव शलाका = पताकाछत्रयोराधारस्तम्भः, दंष्ट्राशलाका, तासां दारिद्रयम् = अभावं, कर्तुं मे = मम, भुजः = बाहुः योग्योऽस्ति । तस्यापि दन्तोत्पाटनं कर्तुं समर्थोऽस्मि इति । दंष्ट्रायां

---

का त्याग नहीं किया बल्कि अभागा मैंने गलीकूँचियों में प्राणत्याग किया ।

यहाँ पर "विषमरणं" एवं भागीरथ्यां दोनों पद दो बार आनुपूर्वी उपात्त है कि पहले का अर्थ भिन्न भिन्न है तथा दूसरा भी एकार्थक नहीं है बल्कि एक सार्थक एवं दूसरा निरर्थक है अतः यहाँपर दोनों स्थानों पर यमक अलङ्कार है ।

अर्थालङ्कार का उदाहरण जैसे—

जिनकी लपलपाती हुई जिह्वाही पताका है तथा फणही छत्र है ऐसे सम्राट वासुकी के ( पताका एवं छत्रों के आधारभूत ) दाँत रूपी दण्डों को समाप्त करने में मेरी एक ही भुजा समर्थ है ।

यहाँ पर भ्रान्तजिह्वामें पताकातादात्म्य का फणा में छत्रतादात्म्य का तथा दातों में शलाकातादात्म्यका आरोप शब्दोपात्त है शब्दतः दिखलाया गया है

दंष्ट्रांशलाकादारिद्रयं कर्तुं योग्योऽस्ति मे भुजः ॥

उक्तिकविः—

उदरमिदमनिन्द्यं मानिनीश्वासलाव्यं
स्तनतटपरिणाहो दोर्लतालेह्यसीमा ।

---

शलाकातादात्म्यस्य, भ्रान्तजिह्वायां पताकातादात्म्यस्य, फणायां छत्रतादात्म्यस्यारोपः शब्दोपात्तः, वासुकौ सम्राट्तादात्म्यस्य समारोपोः नोपात्त इति एकदेशविर्वतिरूपकम् ।

उक्तिकविः—

अभिधयाऽप्रतिपादनीयस्याप्यर्थस्य कमपि चमत्कारविशेषमाधातुं वृत्यन्तरेण प्रतिपाद्यत्वे उक्तिवैचित्र्यम्, तत्र प्रवीणः कविर् उक्तिकविर्भवति । यथा उदरमिति ।

इदं मानिनीश्वासलाव्यं अनिन्द्यम् उदरं, दोर्लतालेह्यसीमा स्तनतटपरिणाह दृक्प्रणालीनिपेयः वदनेन्दुश्च स्फुरति, तद् इह सुदृशि यौवनस्य कल्याः केलयः (भवन्ति इति) अन्वयः ।

कश्चन सहृदयः कस्याश्चिद् लोकोत्तरं सौन्दर्यं प्रस्तुवन्नाह—उदरमिति । इदम्=पुरो दृश्यमानं, मानिनीश्वासलाव्यम्=मानिन्यास्तस्यास्तदीयेन श्वासमात्रेण छेद्यम् (अति कृशत्वात्) अनिन्द्यं=निर्दोषं, उदरम्, दोर्लतालेह्यसीमा=दोर्लताभ्यां=बाहुलताभ्यां, लेह्यः=स्पृश्यः सीमा यस्य सः तादृशः, स्तनतटपरिणाहः=स्तनतटयोः परिणाहो विस्तारः, अनेन स्तनयोः पृथुलत्वं दर्शितम् । दृक्प्रणालीनिपेयः=दृगेव प्रणाली=नलिका, जलप्रवाहिका, तया

---

किन्तु वासुकी में सम्राट का आरोप आर्थ है अतः इसे एकदेशविवर्तिरूपक कहते हैं ।

उक्तिकविका उदाहरण जैसे—

इस कामिनी का निर्दोष उदर श्वास से ही कहीं न टूट जाय । अर्थात् लावण्यपुष्ट उदर कृश है । विशाल स्तनों की सीमा भुजलताओं से परामृष्ट है अर्थात् स्तनोंके प्रान्त भाग भुजाओं को छू रहे हैं । नेत्ररूपी प्रणाली से निपेय अर्थात् सतृष्णभाव से अवलोकनीय इसका मुखचन्द्र परम सुशोभित हो रहा है

स्फुरति च वदनेन्दुर्दृक्प्रणाली निपेय-
स्तदिह सुदृशि कुल्याः केलयो यौवनस्य ॥

यथा वा—

प्रतीच्छत्याशोकीं किसलयपरावृत्तिमधरः,
कपोलः पाण्डुत्वादवतरति ताडीपरिणतिम् ।

---

निपेयः = सतृष्णम् अवलोकनीयः, वदनेन्दुः = वदनचन्द्रः, स्फुरति = राजते । तत् = तस्मादलौकिकसौन्दर्याश्रयत्वाद् इह = अस्यां सुदृशि = सुन्दर्याम्, यौवनस्य = तारुण्यस्य, कुल्याः = शुभाः, अप्रत्युषिताः, अभिनवाः, केलयः = क्रीडाः हावभावलीलादयो वा भवन्ति ।

अत्र लाव्यत्वस्य कृशतमतृणविशेषधर्मस्य उदरे, लेह्यत्वस्य लेह्यपदार्थधर्मस्य स्तनसीमनि, निपेयत्वस्य, तरलतरपदार्थधर्मस्य, वदनेन्दौ बाधात् क्रमशः भङ्गुरत्वादिसम्बन्धेन अतिशीघ्रादौ लक्ष्ये सौन्दर्यवत्ता सुन्दर्या अभिव्यज्यते । अलौकिकसौन्दर्याभिव्यक्तत्वाद् उक्तिकविकाव्यमिदम् ।

उक्तिवैचित्र्यस्यैव द्वितीयमुदाहरणम् ।

अधरः आशोकीं किसलयपरावृत्तिं प्रतीच्छति, कपोलः पाण्डुत्वात् ताडी-परिणतिं अवतरति, दृष्टिः, परिम्लानप्रायां कमलिनीं अनुवदति, इति इयं, माधुर्यं स्पृशति तनुत्वं च भजते । इत्यन्वयः ।

---

इसलिए लगता है कि इस सुन्दरीमें यौवन की अप्रत्युषित सर्वथा नवीन केलियाँ अठखेलियाँ कर रही हैं ।

यहां पर लाव्यत्व, लेह्यत्व, निपेयत्व आदि अन्यपदार्थों के धर्म अन्य पदार्थों पर समारोपित किए गए हैं जिससे अलौकिक सौन्दर्य की अभिव्यञ्जना हो रही है । यहां अलौकिक सौन्दर्य वाच्यवृत्ति से अनामृष्ट उक्तिवैचित्र्य से प्रतिपादित है अतः यह उक्तिकविका उदाहरण है ।

उक्तिवैचित्र्य का ही दूसरा उदाहरण—

विरहिणी इस नायिका का अधर अशोक के किसलय ( नवकोपलों ) से परिवर्तन की इच्छा करता है कपोल अपनी पीतिमा से पक्व ताडीफल का

परिम्लानप्रायामनुवदति दृष्टिः कमलिनी-
मितीयं माधुर्यं स्पृशति च तनुत्वं च भजते ॥

रसकविः—

एतां विलोकय तनूदरि ! ताम्रपर्णी-
मम्भोनिधौ विवृतशुक्तिपुटोद्धृतानि ।

---

अधरः=अधरोष्ठः, आशोकीं=अशोकवृक्षसम्बन्धिनीं, किसलयपरावृत्तिं=नवपल्लवविनिमयं, प्रतीच्छति=वाञ्छति । कपोलः=गण्डः, पाण्डुत्वात्=विरहजन्यपीतिम्ना, ताडीपरिणतिं=परिणतताडीशोभां, अवतरति, धारयति । दृष्टिः, परिम्लानप्रायां=प्रायशःपरिम्लानां, कमलिनीं=पद्मिनीं, अनुवदति=अनुकरोति, इति=इत्थं, इयं=विरहिणी, सुन्दरी, माधुर्यं=मधुरिमाणं, स्पृशति=धारयति, तनुत्वं=कृशत्वं, च भजते=वहति ।

अत्रापि प्रतीच्छेति चेतनधर्मस्य, अधरे, अवतरणेत्यस्य कपोले, अनुवदनेति चेतनधर्मस्य दृष्टौ, उपचरितत्वाद्, "अधरः किसलयतुल्यः, कपोलः, पीतताल-पत्रसदृशः, दृष्टिः म्लानकमिलिनीसदृशीत्यनभिधाय, भङ्ग्यन्तरेणोपचारेण प्रतिपादयतीति उक्तिकविः ।

रसकविर्यथा—यो रसं निबध्नाति, विभावादिभिरभिव्यनक्ति स रस-कविः । ताम्रपर्णीमुद्दिश्य कस्यचिन्नायकस्य नायिकां प्रत्युक्तिः—हे तनूदरि ! एतां ताम्रपर्णीम् विलोकय, यस्या अम्भोनिधौ विवृतशुक्तिपुटोद्धृतानि पयांसि हारमूर्त्या वामभ्रुवां परिणाहिषु पयोधरेषु परिणमन्ति । इत्यन्वयः ।

---

अनुकरण कर रहा है तथा दृष्टि परिम्लान कमलिनी का अनुवाद कर रही है इस प्रकार यह अच्छी भी लग रही है तथा कृश भी हो रही है ।

यहाँ पर भी प्रतीच्छादि चेतन धर्म का अधर आदि में आरोप किया गया है अतः उक्ति कवि का काव्य है ।

रसकवि का उदाहरण जैसे—कोई नायक कहता है कि—

अयि सुन्दरि ! सामने इस ताम्रपर्णी को देखो यह वही ताम्रपर्णी है जिसका जल समुद्र में खुली हुई सीपियों से निकलकर हारमूर्ति में परिणत होता है तथा सुन्दरियों के मोटे-मोटे स्तनों पर विहार करता है ।

यस्याः पयांसि परिणाहिषु हारमूर्त्या
वामभ्रुवां परिणमन्ति पयोधरेषु ॥

मार्गकविः—

मूलं बालकवीरुधां, सुरभयो जातीतरूणां त्वचः,
सारश्चन्दनशाखिनां किसलयान्यार्द्राण्यशोकस्य च ।

---

हे तनूदरि ! हे कृशोदरि सुन्दरि ! एतां=सन्निहितां ताम्रपर्णीं, सरितं, विलोकय पश्य । यस्याः=ताम्रपर्ण्याः, अम्भोनिधौ=समुद्रे, विवृतशुक्तिपुटोद्-घृतानि=विवृतेभ्यः=अनावृतेभ्यः, शुक्तिपुटेभ्यः=शुक्तिमुखेभ्यः उद्घृतानि, बहिर्भूतानि, पयांसि=जलानि, हारमूर्त्या=हारस्वरूपेण विवर्त्य, मुक्ताहार-रूपेण इत्यर्थः, परिणाहिषु=पृथुलेषु, वामभ्रुवां=सुन्दरीणां, पयोधरेषु=स्तनेषु, परिणमन्ति=विवर्तन्ते ।

अत्र पयसः परिणाहिस्तनविपरिणामेन सौभाग्यवत्तां प्रतिपादयतः, नायकस्य परिणाहिस्तनोपलब्धौ सौभाग्यं व्यञ्जयतस्तनूदरि इति सम्बोधनेन, तस्यां रतिरभिव्यज्यते । एवञ्चात्र नायिकालम्बनविभावेन नायकाश्रयविभावेन, स्तनो-परिविवर्तनात् पयसः सौभाग्ययूचनेनानुभावेन, औत्सुक्यादिव्यभिचारिणा, रहः उद्दीपनविभावेन च सहृदयैश्चर्व्यमाणः शृङ्गारो रसः ।

मार्गकविः—मार्गः रीतिरिति यैरुच्यते तत्र, "विशिष्टापदरचनारीतिः" इति वामनाभिमतरीतेरभिन्नो मार्गः, भिन्नो वा । अभिन्नश्चेत् रचनाकविः पूर्व-मेवनिर्दिष्टः भिन्नश्चेद् कः पुनः मार्गः । उच्यते, कविप्रसिद्धिप्रस्थानं मार्गः । कविप्रसिद्ध्या पदार्थानां लोकेऽतथाभूतानामपि प्रयोगात् कविमार्गानुसरणान्

---

यहाँ विशाल स्तनों पर बिहार करने से जल की सौभाग्यता का प्रतिपादन स्तनोपलब्धि के माध्मम से किया गया है, जिससे उस नायक की नायिका में रति व्यक्त होती है । अतः नायकादि आलम्बन, स्तनोपलब्धि में सौभाग्य की सूचना अनुभाव, औत्सुक्य आदि व्यभिचारी भाव, तथा एकान्त स्थान उद्दीपन विभाव, से शृङ्गार रस का आस्वाद होता है ।

मार्ग कवि का उदाहरण जैसे—पहले, हर नेत्र की ज्वाला से दग्ध काम को ग्रीष्म ने तापहर इन वस्तुओं को भेंट किया, जो मूल से फल पर्यन्त

शैरीषी कुसुमोद्गतिः, परिणमन्मोचं च सोऽयं गणो
ग्रीष्मेणोष्महरः पुरा किल ददे दग्धाय पञ्चेषवे ॥

---

मार्गकविर्भवति। अत्र लोके शीतलपदार्थानां सन्तापहारित्वेऽपि कामजन्यस्य सन्तापस्यानपहारित्वम् उद्दीपनविभावत्वात् कवौ प्रसिद्धम्। तमेव मार्गमत्र निबध्नाति कविः।

उशीरमूलादीनां सन्तापहारित्वेऽपि सन्तापकारित्वेनानुभवतः कस्यचिद् विरहिणः कामतप्तस्योक्तिरियम्। दग्धाय = खलाय, नेत्रज्वालादग्धाय वा कामाय पुनरुज्जीवितुं तापहरा इमे पदार्थाः ग्रीष्मेणार्पिताः, यैरुज्जीवितः सः तैरेव, कामिनं सन्तापयति इति भावः।

अथवा विशिष्टापदरचना, अनधिक-साभिप्रायप्रसिद्धपदानां रचना मार्गः सर्वगुणोपेतः, व्यर्थपदयोजना वृत्तपूरणमात्रप्रयोजना रचनेति मार्गरचनयोर्भेदः।

ग्रीष्मेण, बालकवीरुधां मूलं, जातीतरूणां सुरभयः त्वचः, चन्दनशाखिनां सारः, अशोकस्य आर्द्राणि किसलयानि, शैरीषीकुसुमोद्गतिः, परिणमत् मोचं च, सः अयं, ऊष्महरः गणः पुरा दग्धाय पञ्चेषवे ददे। इत्यन्वयः। आमूलात् फलपर्यन्तं सर्वमूष्महरं कामाय दत्तमित्यर्थः।

ग्रीष्मेण = ग्रीष्मर्तुना, दग्धाय = दुष्टाय, तृतीयनेत्रज्वालालीढाय वा, पञ्चेषवे = कामाय, बालकवीरुधां = कोमललतानां, मूलं = कन्दम्, जातीतरूणां = जातीवृक्षाणां, सुरभयः = सुगन्धयः, त्वचः = वल्कलानि, चन्दनशाखिनां = चन्दनवृक्षाणां, सारः = मध्यस्थो मुख्योंऽशः, अशोकस्य, आर्द्राणि = क्लिन्नानि, किसलयाः = पल्लवाः, शैरीषी = शिरीषसम्बन्धिनी, कुसुमोद्गतिः = पुष्पोद्गतिः, परिणमन्मोचं = परिपक्वकदलीफलं च, सोऽयं = मूल-त्वक्-सार-किसलय-कुसुम-फलात्मकः, ऊष्महरः = सन्तापहरः, गणः = समूहः, पुरा = पूर्वं, ददे = दत्तः। ग्रीष्मोद्भवानामेव नेतराणाम् आमूलात् फलपर्यन्तानां क्रमशः पदार्थानां निर्देशात्

---

हैं। उनमें मूल बाल लताओं से, सुगन्धित त्वचा जाती वृक्ष से, सार ( हीर ) चन्दन वृक्ष से, आर्द्र कोपले अशोक से, पुष्प शिरीष से, तथा फल पकी हुई कदली से लिये गये हैं।

**शास्त्रार्थकविः—**

**आत्मारामा विहितरतयो निर्विकल्पे समाधौ,**
**ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।**

---

प्रायः कोमलवर्णानां सत्वात् समासाभावाच्च प्रतिपदं विवक्षितार्थप्रतिपादकत्वात् कामोपहृतोष्महरपदार्थानां वर्णनया विरहिभ्यस् तेषामेव सन्तापदायित्वव्यञ्जनयाऽत्रमार्गकविः ।

शास्त्रार्थकविर्यथा—यः काव्ये शास्त्रार्थं निबध्नाति स शास्त्रार्थकविः । भीमः सहदेवं वदति—आत्मारामा विहितरतयः ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्वनिष्ठाः निर्विकल्पे समाधौ तमसां ज्योतिषां वा परस्तात् यं कमपि वीक्षन्ते तं अमुं पुराणं देवं मोहान्धः अयं कथं वेत्तु ? ( इत्यन्वयः ) आत्मारामाः = आत्मन्येव रमणशीलाः, विहितरतयः = निर्विकल्पकसमाधौ दत्तचित्ताः, युक्तयोगिन इत्यर्थः, ज्ञानोद्रेकात् = विशुद्धज्ञानोदयाधिक्यात् विघटिततमोग्रन्थयः = दूरीकृतान्धकाराज्ञानग्रन्थयः सत्वनिष्ठाः = सत्वमात्रावस्थिताः, योगिनः, तमसां ज्योतिषां वा परस्तात् = तमोरजसोर्गुणयोरतीतं यं कमपि = अनिर्वचनीयं यं देवं, वीक्षन्ते = अपरोक्षसाक्षात्कारं कुर्वन्ति तं विभुं प्रसिद्धम्, अमुं = श्रीकृष्णं, पुराणं पुरुषं = आदिपुरुषं, मोहान्धः = अज्ञानान्धः, अयं = दुर्योधनः, कथं =

---

मार्ग एवं रचना दोनों ही रीति के ही पर्याय लगते हैं किन्तु विशिष्ट पद रचना को मार्ग एवं वृत्तों के पूरण मात्र प्रयोजन से व्यर्थ पदों के उपादान को, रचना समझना चाहिये ।

वेणीसंहार नाटक में सन्धि चिकीर्षु श्रीकृष्ण को बाँधने के लिये उद्यत दुर्योधन के प्रति भीमसेन सहदेव से कहते हैं कि—निर्विकल्पक समाधि अर्थात् जिस समाधि में ज्ञाताज्ञेय एवं ज्ञान रूप त्रिपुटी मात्रअखण्ड ज्ञान में विश्रान्त हो जाती है । ऐसी ब्रह्ममात्र का अपरोक्ष साक्षात्कार कराने वाली समाधि में निरन्तररत, आत्माराम, आप्तकाम, युक्त, योगी जो अपने विशुद्ध ज्ञानोद्रेक से माया की ग्रन्थियों को दूर कर दिये हैं एवं सत्वमात्र में निष्ठ हैं वे जिस तमोगुण एवं रजोगुण अर्थात् अविद्या एवं विद्या से परे किसी अलौकिक पुरातन पुरुष ( ब्रह्म ) को किसी-किसी प्रकार समझ पाते हैं उसे यह मोहान्ध दुर्योधन भला कैसे समझ सकता है ।

**यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्ता-**
**त्तं मोहान्धः कथमयममुं वेत्तु देवं पुराणम् ॥**

**एषां द्वित्रैर्गुणैः कनीयान्, पञ्चकैर्मध्यमः, सर्वगुणयोगी महाकविः। दश च कवेरवस्था भवन्ति। तत्र च बुद्धिमदाहार्यबुद्ध्योः सप्त, तिस्रश्च औपदेशिकस्य। तद्यथा—काव्यविद्यास्नातको, हृदयकविः, अन्यापदेशी,**

---

केन प्रकारेण, वेत्तु = जानातु। योगिभिर्गम्यो महामूढेन दुर्योधनेन कथं गम्यः स्यात्। अत्र निर्विकल्पकसमाधि-सत्त्वोद्रेक-तमोग्रन्थि-ज्योतिरात्मादिशब्दाः तदर्थाश्च योगदर्शनप्रसिद्धाः तेषामत्र काव्ये निबन्धनात् शास्त्रार्थकवि काव्यम् इदम्।

कवीनामधममध्यमोत्तमत्वं गुणाधारेण दर्शयन्नाह—एषां = पूर्वोक्तकविप्रभेदानां मध्ये, द्वित्रैः द्वाभ्यां त्रिभिर्वा, गुणैः = कवित्वगुणैः, कविः कनीयान् = अधमः कनिष्ठो वा, भवति। पञ्चकैः पञ्चभिः कवित्वगुणैः मध्यमः, सर्वगुणयोगी = सर्वगुणैर्युक्तः, महाकविर्भवति।

कवेः = सर्वस्यापि कवेः, बुद्धिमदाहार्यबुद्धिदुर्बुद्धीनां त्रयाणामपि दश = दश संख्याका अवस्था भवन्ति। तत्र = दशसु अवस्थासु बुद्धिमदाहार्यबुद्ध्योः = सारस्वताभ्यासिकापरपर्यायोर्बुद्धिमदाहार्यबुद्ध्योः, सप्त, दुर्बुद्धेरौपदेशिकस्य तु तिस्रः। प्रथमतः सप्त सारस्वताभ्यासिकयोर् अन्तिमास्तिस्र औपदेशिकस्य अवस्था मन्तव्याः। तास्तु एतेषु भवन्ति। ते तु—

---

यहाँ पर निर्विकल्पकसमाधि, तमोग्रन्थि, तमसां, ज्योतिषां, आदि पदों से योगशास्त्र में प्रयुक्त पदार्थों का बोध कराया गया है। अतः यह शास्त्रार्थ कवि का काव्य है।

इन कवियों के दो तीन गुणों से युक्त कवि कनिष्ठ कवि होता है, चार-पाँच गुणों से युक्त मध्यम होता है एवं सभी गुणों से युक्त कवि महाकवि कहा जाता है।

कवि की दश अवस्थायें होती हैं। उनमें बुद्धिमान् एवं आहार्यबुद्धि कवि या शिष्य की प्रथम सात अवस्थायें एवं दुर्बुद्धि या औपदेशिक की अन्तिम तीन अवस्थायें होती हैं। वे अवस्थायें—

सेविता, घटमानो, महाकविः कविराज आवेशिकः अविच्छेदी, सङ्क्रामयिता च । यः कवित्वकामः काव्यविद्योपविद्याग्रहणाय गुरुकुलान्युपास्ते स विद्यास्नातकः । यो हृदय एव कवते निह्नुते च स हृदयकविः । यः स्वमपि काव्यं दोषभयादन्यस्येत्यपदिश्य पठति सोऽन्यापदेशी । यः

---

१--काव्यविद्यास्नातकः २--हृदयकविः ३--अन्यापदेशी ४—सेविता ५--घटमानः ६—महाकविः ७—कविराजः ८—आवेशिकः ९—अविच्छेदी १०—संक्रामयिता च सन्ति । एतेषां क्रियावतां क्रिया एव अवस्था । अतः क्रमशः क्रियावन्तं लक्षयति ।

विद्यास्नातकस्तु—स भवति यः कवित्वाभिलाषः, काव्यविद्या = काव्योपयुक्ता साहित्यविद्या उपविद्या = काव्योपयोगिलोकवृत्तकोशकलादिविद्या च तयोः काव्यविद्योपविद्ययोर्ग्रहणाय गुरुकुलानि उपास्ते = सेवते ।

हृदयकविस्तु--हृदय एव = मनस्येव कवते = काव्यं रचयति लज्जया दोषप्रकाशभिया, हृदय एव निह्नुते = आच्छादयति अन्येभ्यो न दर्शयति सः हृदयकविर्भवति ।

अन्यापदेशी तु—स्वमपि = स्वकीयमपि काव्यं, दोषभयात् कदाचिद्दोषोऽत्र स्यात् इत्याशङ्कया; "अन्यस्येदं काव्यमिति सभासु अपदिश्य = निह्नूय पठति ।

---

१—काव्यविद्यास्नातक, २—हृदयकवि, ३—अन्यापदेशी, ४—सेविता, ५—घटमान, ६—महाकवि, ७—कविराज, ८—आवेशिक, ९—अविच्छेदी, एवं १०—संक्रामयिता है ।

काव्य विद्या स्नातक—जो स्नातक, कवित्व की इच्छा से काव्यार्थ विद्यायें एवं कोशकलादि उपविद्यायें सीखने के लिये गुरुकुल की उपासना करता है उसे काव्यविद्यास्नातक कहते हैं ।

हृदयकवि—जो हृदय में ही कविता करता है तथा हृदय में ही छिपाये रहता है उसे हृदयकवि कहते हैं ।

अन्यापदेशी--जो अपने ही काव्य को कही दोष न हो इस भय से दूसरों के नामसे ( सभाओं में ) पढ़ता है उसे अन्यापदेशी कहते हैं ।

प्रवृत्तवचनः पौरस्त्यानामन्यतमच्छायामभ्यस्यति स सेविता। योऽनवद्यं कवते न तु प्रबध्नाति स घटमानः। योऽन्यतरप्रबन्धे प्रवीणः स महाकविः। यस्तु तत्र तत्र भाषाविशेषे तेषु प्रबन्धेषु तस्मिंस्तस्मिंश्च रसे स्वतन्त्रः स कविराजः। ते यदि जगत्यपि कतिपये। यो मन्त्राद्यु-

---

सेविता—यः प्रवृत्तवचनः छन्दपूरणाभ्यासवशात् प्रचलितकविताप्रवृत्तिः पौरस्त्यानां=प्राचीनानां कवीनामन्यतमच्छायां=कमपि भावमादाय, अभ्यस्यति काव्याभ्यासं करोति स सेविता।

घटमानः—यः, अनवद्यं=निर्दोषं कवते, किन्तु न प्रबध्नाति=प्रबन्धं महाकाव्यं वा रचयितुं न प्रभवति, स घटमानो भवति। अर्थात् यस्य रसभावपूर्णा रचनाशक्तिराप्रबन्धं न तिष्ठति कतिपयपद्यान्येव निर्मातुं प्रभवति स घटमानः।

महाकविः—यः अन्यतरप्रबन्धे=गद्यपद्ययोरुभयोरन्यतरस्मिन् वा प्रबन्धे प्रवीणः=निपुणः स महाकविः।

कविराजः—यश्च तत्र तत्र भाषाविशेषे=मागधीशौरसेन्यादिप्राकृतसंस्कृतापभ्रंशादिभाषासु, तेषु प्रबन्धेषु=तत्तदलङ्काररसादिपूर्णगद्यपद्यादिमहाप्रबन्धेषु तस्मिन् तस्मिन् च रसे=नवरसेषु, प्राधान्येन विवक्षिते तस्मिन् तस्मिन् रसविशेषे, स्वतन्त्रः=सर्वथायासरहितः, अनतिरिक्तोद्योगसम्पन्नः, स कविराजो भवति। यदि=सम्भावनायां ते स्युस्तर्हि जगत्यपि=निखिलेपि संसारे, कतिपये

---

सेविता—जो काव्यमें प्रवृत्त होकर प्राचीन कवियोंकी अर्थादिछायाको लेकर अभ्यास करता है उसे सेविता कहते हैं।

हृदयकवि अन्यापदेशी एवं सेविता की कविता ग्राह्यतो होती है किन्तु ये स्वयं ही अत्यन्त सङ्कुचित होते हैं। इन्हें आहार्यबुद्धि कवि माना जा सकता है।

घटमान—जो कविता निर्दुष्ट प्रशस्त कर लेता है। किन्तु उसे प्रबन्ध ( महाकाव्य ) का रूप नहीं दे पाता उसे घटमान कहते हैं।

महाकवि—जो गद्य पद्य किसी भी प्रबन्धमें प्रवीण होता है उसे महाकवि कहते हैं।

कविराज—जो उन-उन भषाओंमें उन-उन प्रबन्धोंमें तथा तद्-तद् रसोंमें स्वतन्त्र होता है उसे कविराज कहते हैं।

पदेशवशाल्लब्धसिद्धिरावेशसमकालं कवते स आवेशिकः। यो यदेवेच्छति तदेवाविच्छिन्नवचनः सऽविच्छेदी। यः कन्याकुमारादिषु सिद्धमन्त्रः सरस्वतीं सङ्क्रामयति स सङ्क्रामयिता।

---

=अल्पीयांस एव! औपदेशिकस्य तिस्रः अवस्था दर्शयन्ति।

आवेशिकः—यो मन्त्राद्युपदेशवशात्=मन्त्रसारस्वतचूर्णसेवनमन्त्रसिद्धपुरुषकृतशिरःस्पर्शदेवतावरदानादिभिः, लब्धसिद्धिः=प्राप्तकवित्वसिद्धिः, आवेशसमकालमेव=यावत्कालं तत्प्रभावस्तावत्कालमेव कवते स आवेशिकः।

अविच्छेदी—यो यदेवेच्छति=यद्यत्शास्त्रकाव्यादिविषयवस्तु इच्छति, तत्तदेवाविच्छिन्नवचनः=तेष्वेव,अविछिन्नवचनः सतृणाभ्यवहारित्वगुणवशात् काव्यानुकूलाननुकूलग्रहणत्यागविवेकराहित्यात्, अविच्छेदेन निखिलरचनः, अविच्छेदी भवति। यत्तु कैश्चित्, य इच्छामात्रेण काव्यं कर्तुं शक्नोति न तस्य किमपि प्रतिबन्धकं सोऽविच्छेदी" इति व्याख्यातम्, तैस्तु कविराजाविच्छेद्योः किमन्तरं विधास्यत इति त एव जानन्तु।

संक्रामयिता—यः कन्याकुमारादिषु=कन्यासु कुमारेषु, आदिग्रहणेन येषु केषुचित् पुरुषेषु, सरस्वतीं सङ्क्रामयति=काव्यघटनानुकूलां वाणीं, संक्रामयति सिद्धदेवादिनिष्ठां सरस्वतीं प्रवेशयति, न तु स्वस्मिन् प्रवेश्य कवयति स सिद्धमन्त्रः, तान्त्रिकः संक्रामयिता कविर्भवति। अन्यत्र निष्ठां शक्तिम् अन्येषु प्रवेश्य

---

ये कविराज सम्पूर्ण संसारमें थोड़े होते हैं।

आवेशिक—जो मन्त्र आदि उपदेशके बल पर सिद्ध हो जाता है तथा जब तक उसका आवेश रहता है तभी तक कविता करता है उसे आवेशिक कहते है।

अविच्छेदी—जो जिस किसीकी इच्छा या ज्ञान करता है उसीको उचितानुचित ग्राह्याग्राह्यका विना विवेक किए (अविच्छेद रूपसे) कवितामें निवन्धित कर देता है उसे अविच्छेदी कहते हैं।

संक्रामयिता—जो मन्त्रों की सिद्धिसे कन्या या कुमारोंमें सरस्वतीको संक्रान्त कर उससे कविता कराता है उसे संक्रामयिता कहते हैं।

सततमभ्यासवशतः सुकवेः वाक्यं पाकमायाति। "कः पुनरयं 'पाकः ?" इत्याचार्याः। "परिणाम" इति मङ्गलः। "कः पुनरयं परिणामः ?" इत्याचार्याः। "सुपां तिङां च श्रवःप्रिया व्युत्पत्तिः" इति मङ्गलः। सौशब्द्यमेतत्। "पदनिवेशनिष्कम्पता पाकः' इत्याचार्याः। तदाहुः—

आवापोद्धरणे तावद्यावद् दोलायते मनः।

---

काव्यनिर्मापयितृत्वेनास्य काव्यं प्रति प्रयोजकता बोध्या।

सुकवेः वाक्यस्य पाकं लक्षयति।

सुकवेः=सम्प्रदायाधिगतकाव्यविद्यस्य रसभावालंकारघटननिपुणस्य सततं=निरन्तरं, अभ्यासवशतः=अनुशीलनवशात् वाक्यं, पाकमायाति=पाकंप्राप्नोति। पाकं व्यांचिख्यासयाऽऽह—कः पुनरयं पाकः इत्याचार्याः पृच्छन्ति। मङ्गलस्तूत्तरति—परिणामः,=परिणतिर् इति। पुनश्च प्रश्नयन्ति, 'कः पुनरयं परिणामः ?" पुनर्मङ्गलस्तूत्तरति--सुपांतिङां च=सुबन्तानां तिङन्तानाञ्च श्रवःप्रिया व्युत्पत्तिः=श्रुतिमनोहरः सन्निवेशः। पुनश्चाचार्या मङ्गलमतं निराकृत्यै लक्षयन्ति पाकम्—नायं पाकः, अपितु सौशब्द्यमेतद=शब्दसौष्ठवमात्रम्। अतः पदनिवेशनिष्कम्पता=पदानां सुप्तिङन्तानां निवेशे=सान्निवेशे, न्यासे, निष्कम्पता=स्थिरता पाकः कश्चन कविधर्म इति।

तदाह—

यावद् मनः दोलायते, तावत् अवापोद्धरणे प्रवृत्तिः। हन्त ! पदानां स्थैर्ये

---

इस प्रकार कवियोंकी दश अवस्थायें निरूपितकी गयीं। अब वाक्य पाक का निरूपण करेंगे।

निरन्तर अभ्याससे सुकवियोंके वाक्य, पाकको प्राप्त करते हैं। आचार्यों का कहना है कि "यह पाक क्या है ?

मङ्गल उत्तर देते हैं, "परिणामको पाक कहते हैं।

पुनः आचार्य प्रश्न करते हैं—यह परिणाम क्या है ?

पुनः मङ्गल उत्तर देते है—सुबन्त एवं तिङन्तो का श्रुतिमनोहर सन्निवेश ही परिणाम है।

आचार्य कहते हैं कि यह तो सौशब्द्य शोभनशब्दसन्निवेशमात्र है। वस्तुतः पद विशेषकी निष्कम्पता (स्थिरता) ही पाक है। जैसा कि कहा गया है—

पदानां स्थापिते स्थैर्ये हन्त सिद्धा सरस्वती ॥

'आग्रहपरिग्रहादपि पदस्थैर्यपर्यवसायस्तस्मात्पदानां परिवृत्तिवैमुख्यं पाकः' इति वामनीयाः ॥ तदाहुः—

यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम् ।
तं शब्दन्यासनिष्णाताः शब्दपाकं प्रचक्षते ॥

---

स्थापिते सरस्वती सिद्धेत्यन्वयः । यावद् मनः, दोलायते = विकल्पारूढं भवति, तावद् अवापोद्धरणे = पदानां अवापे = निवेशे, उद्धरणे — निष्कासने, परित्यागे वा प्रवृत्तिर्भवति । पदानां = सुप्तिङन्तानां स्थैर्ये स्थापिते = स्थिरतायां स्थापितायां, सरस्वती सिद्धा भवति । एतेन पदानां परिवर्तनानर्हत्वं पाक इति ।

वामनीया विसंवदन्ते — उद्धरणयोग्येऽपि पदे कवीनां आग्रहपरिग्रहाद् = इदमेव पदं निवेश्यम् इति आग्रहकारणाद्, पदस्थैर्यपर्यवसायः = पदापरिवर्तनपर्यवसानं भवति तस्मात् पदानां परिवृत्तिवैमुख्यं = परिवृत्त्या, प्रकृतरसभावादिवैमुख्यं तत् पाकः । परिवर्तनेन प्रकृतरसापोषकत्वम्, पाक इत्यर्थः ।

तदाहुः—

यत् पदानि परिवृत्तिसहिष्णुतां त्यजन्ति एव, शब्दन्यासनिष्णाताः तं शब्दपाकं प्रचक्षते । इत्यन्वयः ।

यत्, पदानि = सुप्तिङन्तादीनि, परिवृत्तिसहिष्णुतां = परिवृत्तिसहत्वं त्यजन्त्येव = निश्चयेन त्यजन्ति, परिवृत्तिं नैव सहन्ते, परिवृत्ते सति समीहितार्थं नोपस्थापयन्ति, शब्दन्यासनिष्णाताः = शब्दन्यासनिपुणाः महाकवयः = कवि-

---

जब तक मन दोलायमान रहता है । तब तक पदों के अवाप तथा उद्वापमें प्रवृत्ति रहती है । जब पदों के निवेशमें स्थिरता स्थापित हो जाय तो सरस्वती को सिद्ध समझना चाहिए ।

वामनीयों का मत है कि पद की स्थिरता तो कवियोंके आग्रहके कारण भी पर्यवसित हो सकती है वस्तुतः पदोंकी परिवर्तनसे विमुखता ही पाक है । जैसा कि कहा गया है—

शब्दोंके निवेशमें निष्णात ( महाकवि ) उसे शब्दपाक कहते हैं जिसमें पद अपने परिवर्तन की सहिष्णुता को नियतरूप से छोड़ देते हैं ।

'इयमशक्तिर्न पुनः पाकः' इत्यवन्तिसुन्दरी। यदेकस्मिन्वस्तुनि महाकवीनामनेकोऽपि पाठः परिपाकवान्भवति, तस्माद्रसोचितशब्दार्थसूक्तिनिबन्धनः पाकः। यदाह—

गुणालङ्काररीत्युक्तिशब्दार्थग्रथनक्रमः।
स्वदते सुधियां येन वाक्यपाकः स मां प्रति॥

---

राजा वा तं शब्दपाकं प्रचक्षते = कथयन्ति।

अत्र अवन्तिसुन्दरी विसंवदते—तदभिप्रायस्तु—पदानां परिवृत्तिवैमुख्यं वस्तुतत्त्वं, अलंकारतत्त्वं, रसतत्त्वं वा आदाय प्रभवति, तत्र वस्तुतत्त्वे एकस्मिन्नेव अनेकेषां कवीनाम् अनेकः पाठः परिपाकवान् दृश्यते। अतः पदानां परिवृत्तिवैमुख्यमशक्तिरपि भवितुं शक्नोति। रसतत्त्वमादाय चेत्—तदुचितगुणालंकाररीत्यादिनिबन्धनः पाकः मन्तव्यः। यथोक्तम्—

इयमशक्तिर्नपुनः पाकः इत्यवन्तिसुन्दरी। यद् एकस्मिन् वस्तुनि = एकस्मिन्नेवार्थे, वस्तुतत्त्वे, महाकवीनां अनेकः पाठः परिपाकवान् अस्ति। तस्माद्—रसोचितशब्दार्थसूक्तिनिबन्धनः = रसानुकूलशब्दार्थालंकारनिबन्धनः पाको भवति। यदाह—गुणालंकार इति।

मांप्रति गुणालङ्काररीत्युक्तिशब्दार्थग्रथनक्रमः, स वाक्यपाकः येन सुधियां स्वदते।

मांप्रति = मद्दृष्ट्या, गुणालङ्काररीत्युक्तिशब्दार्थग्रथनक्रमः = गुणानामलङ्काराणां रीतीनामुक्तिनां शब्दानामर्थानाञ्च ग्रथनस्य क्रमः, एव वाक्यपाकः, येन ग्रथनक्रमेण सुधियां = सहृदयानां चित्तं स्वदते = आनन्दीभवति।

---

अवन्तिसुन्दरीका मत है कि इसे अशक्ति कहते हैं। क्योंकि एक वस्त्वर्थमें महाकवियोंके अनेक पाठ परिपाकवान् होते हैं। अतः रसानुकूल शब्द अर्थ एवं अलङ्कारोंका निबन्धन ही पाक है। जैसा कि--

मेरी दृष्टिसे गुणों, अलङ्कारों, रीतियों, उक्तिवैचित्र्यपूर्ण शब्दों एवं अर्थोंका वह ग्रथनक्रम ही पाक कहा जाता है जिस विन्यासक्रमसे सहृदयोंका चित्त इसका आस्वादन करता है। कहा भी गया है।

तदुक्तम्—

**सति वक्तरि सत्यर्थे शब्दे सति रसे सति।**
**अस्ति तन्न विना येन परिस्रवति वाङ्मधु ॥**

'कार्यानुमेयतया यत्तच्छब्दनिवेद्यः परं पाकोऽभिधाविषयस्तत्स-

---

तदुक्तम्—प्रमाणत्वेनोपन्यस्यति—

वक्तरि सति, अर्थे सति, शब्दे सति, रसे सति, येन विना वाग् मधु न परिस्रवति तद् अस्ति इत्यन्वय ।

वक्तरि सति=प्रतिपादके पुरुषे सति, अर्थे सति=वाच्याद्यर्थे सति, शब्दे सति=प्रतिपादके शब्दे सति, रसे सति=विगलितवेद्यान्तरानन्दरूपे रसे सति, अपि येन विना=येनग्रथनक्रमरूपेण पाकेन विना, वाक्=काव्यं मधु=आनन्दं, आह्लादं वा न परिस्रवति=न क्षरति तदस्ति=तत्तु गुणादीनां ग्रथनक्रमतत्त्वं किञ्चिदन्यदेवास्ति ।

यायावरीयः अत्र विसंवदते । एतस्य मते पाकः कार्यानुमेयः अभिधयाऽप्रतिपाद्यः यत्तद्शब्दाभ्यां निवेद्यो भवति । यथा—

"तन्मञ्जु मन्दहसितं, श्वसितानि तानि, सा वै कलङ्कविधुरामधुराननश्रीः" इत्यादिकम् ।

इत्यत्र तद्पदप्रतिपाद्याः पदार्था वाच्यवृत्त्यनालिङ्गिता अनुभवैगोचरा कमपि चमत्कारमापादयन्ति । एष एव पाकः । पुनर् असौ पाकः अभिधाया अविषयश्चेत्तर्हि कथं व्यवहाराङ्गत्वमस्य अनिश्चितत्वात् इति शङ्कायामुत्तरति—असौ=पाकः, व्यवहाराङ्गमपि, हेतुस्तु, सहृदयहृदयप्रसिद्धिसिद्धत्वम् । अस्य प्रामाण्ये सहृदयहृदयप्रमाणमितिभावः । यथोक्तम्—

कार्यानुमेयतया=कार्यमनुमेयं यस्य सः तस्यभावस्तत्तया, यत्तच्छब्दनिवेद्यः=यत्तद्शब्दाभ्यां प्रतिपाद्यः, अभिधाविषयः=अभिधाया अविषयः, परं पाकः अस्ति । असौ पाकः सहृदयहृदयप्रसिद्धिसिद्धः इति व्यवहाराङ्गमेव । इति यायावरीयः ।

---

वक्ता, अर्थ, शब्द एवं रस सबके रहते हुए भी कुछ ऐसी चीजें हैं जिनके बिना वाणी मधुस्राव नहीं करती है ।

यायावर इससे अलग ही शब्दपाक मानते हैं । इनका कहना है कि पाक

**हृदयप्रसिद्धिसिद्ध एव व्यवहाराङ्गमसौ' इति यायावरीयः। स च कवि-ग्रामस्य काव्यमभ्यस्यतो नवधा भवति। तत्राद्यन्तयोरस्वादु पिचुमन्द-**

पाकभेदं लक्षयति। काव्यमभ्यस्यतः=काव्याभ्यासं कुर्वतः कविग्रामस्य=कविलोकस्य स=पाकः नवधा=नवविधो भवति।

१-पिचुमन्दपाकम्, २-वदरपाकम्, ३-मृद्वीकापाकम्, ४-वार्ताकपाकम्, ५-तिन्तिडीकपाकम्, ६-सहकारपाकम्, ७-क्रमुकपाकम्, ८-त्रपुसपाकम् ९-नारिकेलपाकमिति। लक्षणन्तु—

पिचुमन्दपाकम्—यत् काव्यं आदौ अन्ते च अस्वादु भवति तत् पिचुमन्दपाकम्।

कार्यानुमेय (व्यङ्य), अभिधाका अविषय एवं यत् तद् पदोंसे निवेद्य होता है: अर्थात्, "तन्मञ्जुमन्दहसितं श्वसितानि तानि" यहाँ पर तद् पद, अनुभवैकगोचर अभिधासे अप्रतिपाद्य किसी अलौकिक अर्थ का प्रतिपादन कर रहा है जिससे सहृदय का हृदय चमत्कृत हो उठता है। वस्तुतः यही पाक है।

यह अनुभवैकगोचर रूप अर्थ जो वाक्यका परं पाक है वह व्यवहारका भी अङ्ग होता है क्योंकि सहृदयों के हृदयकी प्रसिद्धि से यह सिद्ध है सहृदय हृदय-मान्य होनेसे इसे असिद्ध भी नहीं कह सकते हैं अतः सिद्ध होता हुआ भी अभिधा से यह प्रतिपाद्य नहीं है यही इसकी विलक्षणता है यही विलक्षणता पाक नामसे कही जा सकती है अतः कहते हैं कि कार्यानुमेयतया—

कार्यसे अनुमेय होने के कारण जो यत् तद् पदों से प्रतिपाद्य होता हुआ अभिधाका विषय नही होता उसे परं पाक कहते हैं। यह सहृदय के हृदयमें सिद्ध ही है इसलिए यह व्यवहारका भी अंग होता है।

यह काव्यपाक अभ्यासतत्पर कवियों में नवप्रकार का होता है—

१—पिचुमन्दपाक, २—वदरपाक, ३—मृद्वीकापाक, ४=वार्ताकपाक, ५ तिन्तिडीकपाक, ६—सहकारपाक, ७—क्रमुकपाक, ८—त्रपुसपाक, ९—नारिकेलपाक, । उनमें—

१—पिचुमन्दपाक—जो आदि एवं अन्त दोनोंमें अस्वादु हो उसे पिचुमन्दपाक कहते हैं पिचुमन्दका अर्थ निम्ब है।

पाकम्, आदावस्वादु परिणामे मध्यमं वदरपाकम्, आदावस्वादु परिणामे स्वादु मृद्वीकापाकम्, आदौ मध्यममन्ते चास्वादु वार्त्ताकपाकम्, आद्यन्तयोर्मध्यमं तिन्तिडीकपाकम्, आदौ मध्यममन्ते स्वादु सहकारपाकम्, आदावुत्तममन्ते चास्वादु क्रमुकपाकम्, आदावुत्तम-

---

वदरपाकम्—आदौ अस्वादु परिणामे = अन्ते मध्यमं = नात्यंतमस्वादु नात्यंन्तं स्वादु अपितु मध्यमं तत् वदरपाकम् ।

मृद्वीकापाकम्--आदौ अस्वादु, अन्ते च स्वादु भवति ।

वार्ताकपाकम्—आदौ, मध्ये, अन्ते च सर्वत्र अस्वादु वार्ताकपाकं काव्यम् ।

तिन्तिडीकपाकम्—आदौ अन्ते चमध्यमस्वादु तिन्तिडीकपाकम् ।

सहकारपाकम्--आदौ, मध्यमस्वादु अन्ते च स्वादु सहकारपाकम् ।

क्रमुकपाकम्--आदौ उत्तमस्वादु, अन्ते च अस्वादु क्रमुकपाकं काव्यम् ।

त्रपुसपाकम्—आदौ उत्तमस्वादु, अन्ते मध्यमस्वादु त्रपुसपाकम् ।

नारिकेलपाकमिति—आदौ, अन्ते च स्वादु नारिकेलपाकम् काव्यम् ।

एतेषामर्थस्तु—पिचुमन्दः = निम्बः । मृद्वीका = द्राक्षा, वार्ताकम् = वृन्ताकम्

---

२—वदरपाक—जो आदिमें अस्वादु हो परिणाममें न तो अस्वादु हो न तो स्वादु हो उसे वदरपाक कहते । वदरका अर्थ है वेर ।

३—मृद्वीकापाक—जो आदिमें अस्वादु हो किन्तु अन्त में स्वादु हो उसे मृद्वीकापाक कहते हैं । मृद्वीकाका अर्थ है द्राक्षा ।

४—वार्ताकपाक—जो आदि में न अस्वादु हो और न तो स्वादु ही हो तथा अन्त में अस्वादु हो उसे वार्ताकपाक कहते हैं वार्ताक को कहते हैं (बैंगन) ।

५—तिन्तिडीकपाक--जो आदि तथा अन्त में न तो स्वादु ही हो न तो अस्वादु ही, उस मध्यमपाकको तिन्तिडीकपाक कहते हैं तिन्तिडीकका अर्थ है इमली ।

६—सहकारपाक—जो पहले तथा अन्त में भी स्वादु ही हो उसे सहकारपाक कहते हैं सहकार का अर्थ है आम्र ।

७. क्रमुकपाक—जो पहले तो उतम हो किन्तु अन्त में अस्वादु हो उसे क्रमुकपाक कहते हैं । क्रमुक का अर्थ है सुपारी ।

मन्ते मध्यमं त्रपुसपाकम्, आद्यन्तयोः स्वादु नारिकेलपाकमिति। तेषां त्रिष्वपि त्रिकेषु पाकाः प्रथमे त्याज्याः। वरमकविर्न पुनः कुकविः स्यात्। कुकविता हि सोच्छ्वासं मरणम्। मध्यमाः संस्कार्याः। संस्कारो हि सर्वस्य गुणमुत्कर्षति। द्वादशवर्णमपि सुवर्णं पावकपाकेन

---

(भाँटाइतिहिन्दी)। तिन्तिडीकम्=चिञ्चा, (इमली) क्रमुकः=पूगः। त्रपुसं=कर्कटी, शेषस्तु स्पष्टार्थः।

तेषां=नवविधपाकानां त्रिषु त्रिकेषु=त्रयाणामेकत्रिके कृते त्रीणित्रिकानि, तेषु प्रथमे पाकाः त्याज्याः परिहार्याः अर्थात्—

पिचुमन्दवार्ताकक्रमुकपाकाः त्याज्याः। तत्रहेतुमुपन्यस्यति—

अकविः वरम्, नपुनः कुकविः। कुतः? कुकविता हि मरणम्, अन्तरं केवलं उच्छ्वासः, उच्छ्वसन् म्रियते इति भावः।

मध्यमाः—वदरतिन्तिडीकत्रपुसपाकाः, संस्कार्याः=संस्कारमर्हन्ति, संस्कारवशात्ते ग्राह्या भवन्ति। न केवलं मध्यमस्य अपितु प्रथमस्यापि संस्कारो गुणमुत्कर्षति। अतउच्यते सर्वस्येति। यतो हि द्वादशवर्णमपि=अनेकवर्णमिश्रितमपि सुवर्णं पावकपाकेन हेमीभवति=सुवर्णीभवति। शेषाः=मृद्वीकासहकारनारिकेलपाकाः, ग्राह्याः= स्वीकार्याः भवन्ति। शेषेषु संस्कारस्यापेक्षा भवति नवेति प्रश्ने उत्तरति—हि स्वभावशुद्धं=सर्वथा निर्दोषं वस्तु न संस्कारमपेक्षते। यतो हि शाणः सुवर्णस्योत्कर्षाधायकोऽपि मुक्तामणेस्तारताम्याय न भवति।

---

८. त्रपुसपाक—जो पहले सुस्वादु हो तथा अन्त में न तो स्वादु हो न तो अस्वादु, उसे त्रपुसपाक कहते हैं। त्रपुस का अर्थ है ककड़ी।

९. नारिकेलपाक—जो आदि तथा अन्त उभयत्र स्वादु हो उसे नारिकेलपाक कहते हैं। नारिकेल का अर्थ नारियल है।

इन नवों काव्यपाकों को तीन-तीन का त्रिक बनाकर तीन त्रिकों में विभक्त कर लें। इन तीनों त्रिकों के पहले २ तीन, अर्थात पिचुमन्दवार्ताक एवं क्रमुकपाक त्याज्य हैं। क्योंकि अकवि होना ठीक है किन्तु कुकवि होना नहीं। कुकविता तो जीतेजी मरण है।

त्रिकों में बीच के तीन अर्थात् वदरतिन्तिडीक एवं त्रपुस पाक संस्कार्य हैं। अभ्यासादि से इनका संस्कार करना चाहिए। ऐसे तो संस्कार (अभ्यासादि)

हेमीभवति । शेषा ग्राह्याः । स्वभावशुद्धं हि न संस्कारमपेक्षते । न मुक्तामणेः शाणस्तारताये प्रभवति । अनवस्थितपाकं पुनः कपित्थपाकमामनन्ति, तत्र पलालधूननेन अन्नकणलाभवत्सुभाषितलाभः ।

सम्यगभ्यस्यतः काव्यं नवधा परिपच्यते ।
हानोपादानसूत्रेण विभजेत्तद्धि बुद्धिमान् ॥

---

अनवस्थितपाकं=अनिश्चितपाकं दुरवस्थितपाकं, हि पूर्वे भामहादयः, कपित्थपाकमामनन्ति । ( भामह अध्याय ५ श्लोक ६२ इत्यत्र ) कपित्थपाकस्य लक्षणंदत्तम् । तत्र कपित्थपाके, पलालधूननेन=पलालस्य, सस्यदण्डस्य धूननेन=कम्पनेन ईषत्कणलाभवत्=यथा कतिपयसस्यकणस्य लाभः तथैव अत्र सुभाषितलाभः ।

अध्यायमुपसंहरति—सम्यगिति ।

सम्यक् अभ्यस्यतः=अभ्यासं कुर्वतः कवेः, काव्यं नवधा=अनुपदोक्तनवप्रकारेण परिपच्यते=परिपाकवद्भवति । तत्परिपाकं काव्यं बुद्धिमान्, हानोपादानसूत्रेण=त्यागग्रहणसूत्रेण, तत् विभजेत्=तस्य विभागं कुर्यात् । अस्वादुप्रधानान् पाकान् परित्यजन् स्वादुप्रधानान् सेवेत ।

---

सभी में गुणोत्कर्ष ला देते हैं । अतः प्रथम एवं मध्यम दोनों को संस्कार अपेक्षित है -अनेक धातुओं से मिश्रित भी स्वर्ण अग्निपाक से शुद्ध स्वर्ण हो जाता है ।

शेष तीन, मृद्वीका सहकार एवं नारिकेलपाक सर्वथा ग्राह्य है । इन्हें संस्कार की अपेक्षा नही होती । क्योंकि स्वभावतः शुद्ध वस्तु संस्कार की अपेक्षा नहीं करती है । शाण स्वर्ण के उत्कर्ष के लिए तो हो सकता है किन्तु स्वभाव शुद्ध मुक्तामणि की उत्कर्षता के लिए नहीं है ।

भामहादि कपित्थपाक का निर्देश किये हैं यह कपित्थपाक अनवस्थितपाक कहा जाता है । इस पाक में आद्यन्त की अनवस्था होती है । तथा जैसे धान के डण्ठल के विधूनन से कुछ एक धान के कण हाथ लग जाते हैं वैसे ही बार-बार अनुशीलन करने पर कहीं कोई सुभाषित इस अनवस्थितपाक में मिल पाता है !

**अयमत्रैव शिष्याणां दर्शितस्त्रिविधो विधिः ।**
**किन्तु विविधमप्येत त्त्रिजगत्यस्य वर्त्तते ॥**

॥ इति राजशेखरकृतौ काव्यमीमांसायां कविरहस्ये प्रथमेऽधिकरणे शिष्यविशेषेषु काव्यपाककल्पः पञ्चमोऽध्यायः ॥

---

अत्र एव शिष्याणां, त्रिविधः = त्रिप्रकारकः, "विधिः = कल्पः दर्शितः । किन्तु अस्य, शिष्यविधेर्विविधमपि = वैविध्यमपि त्रिजगति = त्रिलोक्यां वर्तते ।

काशीहिन्दूविश्वविद्यालयाध्यापकेन, सनातनकविशिष्येणश्रीमदम्बिकाप्रसादस्य सूनुना, डॉ० चन्द्रमौलिद्विवेदिना पूरितेयं संस्कृतव्याख्या ।

---

इस प्रकार काव्याभ्यास मे तत्पर लोगों के लिए काव्य नव प्रकारसे परिपक्व होता है । बुद्धिमान् इस काव्य का विभाग ऊपर बतलाये गये त्याग एवं ग्रहण के पाकसूत्रों से करें ।

उसी अध्याय में शिष्यों के त्रिविध कल्पों को भी दर्शा दिया गया है ऐसे इनके कल्प इस त्रिलोकी में अनन्त हो सकते हैं ।

●

